क्त्यधिकरणीभूतस्य तदनधिकरणक्षणस्योत्तरक्षणे तदनधिकरणत्वं तत्र तज्जन्यत्वमिति निष्कर्षः।

अधिकरणत्वानधिकरणत्वे च स्वस्वव्यापारान्यतरद्वारा विवक्षिते। तेन यागादौ न स्वर्गजनकत्वानुपपत्तिः। अत्र च तद्घटादौ तद्धटजनकतद्दण्डादिनियततद्रासभादिजन्यतावारणायानन्यथासिद्धत्वमपि विशेषणं देयम्। यद्वा साध्यत्वेनाभिमतं यत्तत्प्रतियोग्यनुयोगिभावसम्बन्धाश्रयो यस्तन्नाशकीभूतस्वस्वव्याप्यस्वाभावान्यसकलसमवधाने सति यत्सत्वे यत्सत्वं यदसत्वे च यदसत्वं तदेव तज्जन्यमिति विवक्षितम्। तादृशसम्बन्धाश्रयश्च दंडादिस्थले घटादिप्रागभावः। मङ्गलस्थले च साध्यत्वाभिमत एव विघ्नप्रागभावः। एवं च रासभादौ नातिव्याप्तिः। रासभतद्व्याप्येतरयावद्घटप्रागभावनाशकस्य घटसामग्रीरूपस्य सत्वे रासभव्यतिरेकेण घटव्यतिरेकस्यासिद्धेः। पूर्ववदप्रसिद्धिवारणायान्वयव्यतिरेकाभ्यां मंगलाभावस्य विघ्नहेतुतया तद्घटितमंगलतद्व्याप्येतरयावद्विघ्नप्रागभावनाशकसमवधाने मङ्गलसत्त्वस्याप्रसिद्ध्या तत्राव्याप्तिवारणाय चान्यान्तम्। अत्रापि तादृशसम्बन्धाश्रयं यत्किंचित्तत्तद्व्यक्तित्वेनोपादाय तन्नाशकत्वं निवेशनीयम्। अन्यथा घटस्यापि तादृशसम्बन्धाश्रयत्वेन तन्नाशकसकलसमवधाने दण्डसत्वे घटसत्वस्याभावेन तथाविधसम्बन्धाश्रयविघ्ननाशकविघ्नघटितसकलकारणसमवधाने मंगलसत्वे विघ्नप्रागभावस्याभावेन च घटविघ्नप्रागभावयोर्दण्डमंगलजन्यत्वे न स्यादिति बोध्यम्।

वस्तुतस्तु तादृशसम्बन्धाश्रययद्व्यक्तेः स्वस्वव्याप्यस्वाभावान्यसकलकारणसत्वे यत्सत्वे यत्सत्वं तद्व्यक्तेस्तादृशसकलकारणसत्वे यद्व्यतिरेके यद्व्यतिरेक इत्येव वक्तव्यं ला-

घवात् । एवं च घटीयताहशयावत्कारणमादाय विघ्नीयता-हशयावत्कारणमादाय च घटविघ्नप्रागभावयोर्दण्डमंगलजन्यता बोध्येति वदन्ति-

तदसत् । योगक्षेमसाधारणकार्य्यकारणभावग्रहस्य प्रवृत्तिहेतुत्वे मानाभावात् । एतेन विघ्नप्रागभाव एव सर्वत्र मंगलस्य समाप्तिहेतुत्वे द्वारम् । अत एव विघ्नो मा भूदितिद्वारकामनया प्रवृत्तिर्न तु विघ्नो निवर्त्ततामिति कामनयेत्यपि संगच्छते इत्यपि परास्तम् ।

ननु स्तुत्योंकाराथशब्दानामपि समाप्तिहेतुतया कथं मङ्गलमेव तद्धेतुरिति चेत्-

न । तेषामपि वाचिकमंगल एवांतर्भावादिति दिक् ।

## अथ प्रमाणवादः ।

अथ प्रमाणादिषोडशपदार्थतत्वज्ञानान्निःश्रेयसाधिगम(१) इति भगवतो महामुनेरक्षपादस्योक्त्या प्रमाणादिपदार्था निरूपणीयाः । तत्र मानाधीना सर्वेषां व्यवस्थिति(२)रिति प्रथमं प्रमाणतत्वं निरूप्यते ।

अत्र माध्यमकाः(३)-प्रमात्वस्य स्वतः परतो वा दुर्ग्रहतया

(१) प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निः श्रेयसाधिगम इति न्यायशास्त्रस्यादिमं सूत्रम् ।

(२) मानाधीना मेयसिद्धिस्तथा चोक्तं 'प्रमेयसिद्धिः प्रमाणाद्धी'ति सांख्यसप्तत्यामीश्वरकृष्णेन ।

(३) बौद्धानामन्यतमो विभागो माध्यमिकः शून्यवादीत्यपरनामकः। माध्यमिकमतम्—नास्ति बुद्धिरपीत्याह वादी माध्यमिकः किल ।

न सन्नासन्न सदसन्न चोभाभ्यां विलक्षणम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥

प्रमात्वे माध्य- तद्ग्रहे साध्यस्य प्रमाकरणत्वरूपप्रमाणत्वज्ञानस्या-
मकानां विचारः प्यसंभवेन प्रमाणतत्वनिरूपणं निष्फलम्। न च बोधकत्वरूपप्रमाणत्वज्ञानं सम्भवत्येवेति वाच्यम्। तथापीष्ट-साधनताज्ञाने प्रामाण्यनिश्चयस्य प्रवर्त्तकतया तं विना प्रमाणतत्वनिरूपणे प्रवृत्त्यसम्भवेन तदसम्भवात्।

नन्विदं सम्भवत्युक्तप्रामाण्यनिश्चयस्य प्रवर्त्तकत्वे तदेव न सम्भवति। तथा हि—उक्तप्रामाण्यनिश्चयो न प्रवृत्तिमात्रे हेतुः कृष्यादिगोचरसकम्पप्रवृत्तौ व्यभिचारात्। नापि निष्कंपप्रवृत्तौ। तत्र लाघवेनाप्रामाण्यज्ञानास्कन्दितेष्टसाधनतानिश्चयत्वेनैव हेतुत्वात्। अथ यत्संशयव्यतिरेकानिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तत्र हेतुरनुमितौ व्याप्तिरिवेतिनियमेन निष्कंपप्रवृत्तावुक्तप्रामाण्यनिश्चयस्य हेतुत्वसिद्धिः। न च व्याप्तिसंशयादेर्ग्राह्याभावानवगाहितयाऽनुमितावप्रतिबन्धकतया दृष्टान्तासिद्धिरिति वाच्यं, अनुभवबलेन तस्य तत्र स्वातंत्र्येण प्रतिबन्धकत्वादितिचेत्—न। घटाद्यवगाहिसमूहालंबनव्याप्तिसंशयव्यातिरेकानिश्चयप्रतिबध्यायां घटादिनिश्चयाजन्यायामनुमितौ व्यभिचारेणोक्तनियमासम्भवात्। न च ज्ञानत्वेन कार्य्यमात्रजनकस्येश्वरीयघटादिनिश्चयस्यानुमितौ हेतुत्वमस्त्येवेति वाच्यम्। तथा सति ईश्वरीयप्रामाण्यनिश्चयजन्यतया सिद्धसाधनेनोक्तनियमेन प्रवृत्तावुक्तप्रामाण्यनिश्चयत्वेन हेतुत्वस्यासिद्धेः। न च यत्संशयत्वादिनां यत्र प्रतिबन्धकता तन्निश्चयत्वेन हेतुतेतिव्याप्तिबलेन प्रवृत्तौ प्रामाण्यनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यत्वस्य साध्यतया नोक्तव्यभिचारो न वा सिद्धसाधनमितिवाच्यम्। तथापि यत्संशयपदस्य वैयर्थ्यात्। न च घटादिव्यतिरेकानिश्चयप्रतिबध्ये घटादिसंशया-

प्रतिबध्ये घटादिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यत्वाभाववति घटादिज्ञाने योग्यताव्यतिरेकनिश्चयप्रतिबध्ये योग्यतासंशयाप्रतिबध्ये योग्यतानिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यत्वाभाववति शाब्दबोधे च व्यभिचारवारणाय तत्सार्थक्यमिति वाच्यम् । तथापि यद्व्यतिरेकनिश्चयपदवैयर्थ्यात् । न च व्यभिचारशंसयप्रतिबध्ये व्यभिचारनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यत्वाभाववति व्याप्तिनिश्चये व्यभिचारवारणाय तत्सार्थक्यमिति वाच्यम् । ग्राह्यसंशयस्याप्रतिबन्धकतया व्यभिचारसंशये व्याप्तिनिश्चयप्रतिबन्धकत्वाभावात् । न चान्यत्र ग्राह्यसंशयस्याप्रतिबन्धकत्वेऽपि व्याप्तिनिश्चये व्यभिचारसंशयोऽवश्यं प्रतिबन्धकः । अन्यथा व्यभिचारसंशयाधायकत्वेन सन्दिग्धोपाधेरदूषकत्वापत्तेः । तथा च तत्र व्यभिचारवारणाय यद्व्यतिरेकनिश्चयपदमावश्यकम् । एवं च यद्व्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकतैव निवेश्यापृथक् प्रतिबन्धकताद्वयनिवेशे गौरवादिति वाच्यम् । तथाप्यनुमितिं प्रति संशयनिश्चयसाधारणव्याप्तिव्यतिरेकज्ञानत्वेन प्रतिबन्धकतयैव व्याप्तिसंशयादिकालेऽनुमित्यापादनासम्भवेनानुमितिं प्रति व्याप्तिनिश्चयत्वेनाहेतुतया दृष्टान्तासिद्ध्या तादृशनियमासिद्धेः । न च यद्व्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताश्रयं यत्तत्तन्निश्चयजन्यमित्येव नियमो न तु निश्चयत्वावच्छिन्नजन्यत्वघटितोऽपि । तन्निश्चयजन्यत्वं च तन्निश्चयानधिकरणक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकत्वमिति न दृष्टान्तासिद्धिरिति वाच्यम् । तथाप्यनुमितौ ग्राह्याभावानवगाहिनः साध्यसामानाधिकरण्यघटितव्याप्तिव्यतिरेकज्ञानस्य प्रतिबन्धकताया अनुभवकलहग्रस्ततयाऽसिद्धत्वेन दृष्टान्तासिद्धेर्दुर्वारत्वादिति चेत्—

नैवम् । प्रामाण्यनिश्चयस्याप्रवर्त्तकत्वेऽप्यप्रामाण्यज्ञानानास्कन्दितेष्टसाधनताज्ञानरूपकारणसंपत्तये तदपेक्षाया आवश्यकतया तस्य च स्वतः परतो वाऽसंभवेन प्रवृत्त्यसंभवेन प्रमाणतत्त्वनिरूपणासंभवस्य दुरुद्धरत्वादिति वदन्ति ।

तत्र मीमांसकाः—प्रामाण्यं स्वतो ग्राह्यमेव(१) ।

तत्र गुरुमते प्रामाण्यस्य स्वतो ग्राह्यत्वम् । अप्रामाण्यग्रहासमवधानकालीनयावत्स्वाश्रयविषयत्वम् ।

मुरारिमिश्रमते चाप्रामाण्यग्रहासमवधानकालीनयाव-
मीमांसकमतम् त्स्वाश्रयविषयकलौकिकप्रत्यक्षविषयत्वम् ।

भट्टमतेऽप्रामाण्यग्रहासमवधानकालीनज्ञाततालिंगकानुमितिविषयत्वम् ।

अत्र नैयायिकेन सह विवादे मतत्रयसाधारणी विप्रतिपत्तिरपेक्षिता । सा च ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वेति ।

अत्र विधिकोटिर्मीमांसकानां निषेधकोटिर्नैयायिकानाम् । अत्र क्वापि प्रामाण्ये यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वाभावेन बाधवारणाय साध्यस्थज्ञानपदं स्वाश्रयपरं वाच्यम् ।

---

(१) वस्तुतो गुरुमते एव प्रमाण्यस्य स्वतो ग्राह्यत्वम् । स्वतो ग्राह्यत्वं च स्वजनकसामग्रीजन्यत्वम् । स्वं ज्ञानं तज्जनकसामग्रीजन्यमेव प्रामाण्यम् । एतच्च गुरुमते एव सिद्ध्यति । अत्रैव ज्ञानजनकसामग्रीतो ज्ञानप्रामाण्यमपि सिद्ध्यति । भट्टमते तु स्वजन्यज्ञाततालिङ्गकानुमितिसाग्रीतस्तथा मुरारिमिश्रमते च स्वजन्यस्वप्रत्यक्षसामग्रीतः प्रामाण्यं सिद्ध्यति । अतो भट्टमिश्रयोर्मते परतः एव प्रामाण्यम् । नैयायिकमतापेक्षया आपेक्षिकस्वतस्त्वं भट्टमिश्रयोर्मतेऽप्यस्त्येव । तथा चाहुस्तत्त्वचिन्तामणिरहस्ये मथुरानाथभट्टाचार्य्याः—"स्वतः स्वाश्रयजनकसामग्रीतः । स्वं प्रमात्वम् । एतच्च गुरुमते । परतस्तदन्यसामग्रीतः । एतच्च मिश्रमत–भट्टमत–न्यायमतेषु" ।

स्वपदं च पक्षीभूतप्रामाण्यपरम् । एवं च पक्षे ज्ञानपदानुपादाने पक्षतावच्छेदकाक्रान्तेच्छाप्रामाण्ये तदाश्रयग्राहकयावत्सामग्र्यन्तःपातिन्या इच्छाग्राहकसामग्र्या अग्राह्यत्वेन बाध इति ज्ञानत्वघटितप्रामाण्यस्य पक्षतालाभाय पक्षे ज्ञानपदम् ।

वस्तुतस्तु घटत्ववद्विशेष्यकत्वविशिष्टघटत्वप्रकारकत्वत्वादिना विशिष्य न पक्षता । भासमानवैशिष्ट्यप्रतियोगित्वरूपप्रकारत्वघटितपक्षस्य समवायादिरूपवैशिष्ट्यातीन्द्रियत्ववादिनां गुरूणामप्रसिद्धेः । अतः प्रमापदप्रवृत्तिनिमित्तत्वेनैव पक्षता । प्रमापदप्रवृत्तिनिमित्तं तु तेषां परस्परनिरूप्यनिरूपकभावापन्नधर्मत्वधर्मित्वोभयावगाहिज्ञानत्वम् ।

नैयायिकमते तु तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकज्ञानत्वमिति नाप्रसिद्धिः । एवं च कुत्रापि प्रमापदप्रवृत्तिनिमित्ते प्रमापदप्रवृत्तिनिमित्ताश्रयग्राहकयावत्सामग्र्यग्राह्यत्वेन बाध इति घटज्ञानादिवृत्तिप्रमापदप्रवृत्तिनिमित्तत्वेन पक्षतालाभाय पक्षे ज्ञानपदमिति तत्त्वम् । घटज्ञानं प्रमेत्यनुमितिसामग्रीमादाय विधौ सिद्धसाधनवारणाय यावत्त्वं सामग्रीविशेषणम् । तच्चाशेषत्वं न त्वनेकत्वम् । तेन यत्रैकैव ज्ञानग्राहिका सामग्री तत्र न साध्याप्रसिद्धिः । ग्राह्यत्वं च ग्रहविषयत्वम् । ग्रहे च सामग्रीपदार्थस्य सामग्रीजन्यस्याभेदेनान्वयः ।

वस्तुतस्तु ग्राह्यत्वं विषयिताप्रतियोगित्वम् । सामग्रीपदं सामग्रीत्वपरम् । यावत्त्वं व्यापकत्वरूपं विषयिताविशेषणम् । तथा च तादृशसामग्रीत्वव्यापकविषयिताप्रतियोगित्वं साध्यं पर्यवसितम् । व्यापकताघटकसम्बन्धश्चात्र स्वाश्रयग्रहजनकत्वम् । व्याप्यताघटकश्च स्वरूपसम्बन्धः । स्वजन्यग्रहत्वस्य व्याप्यताघटकसम्बन्धत्वे स्वरूपसम्बन्धस्य च व्यापकताघटकत्वे तु सामग्री-

व्यापकेत्येवं सम्यक् ।

वस्तुतस्तु यथाश्रुतयावत्सामग्रीग्राह्यत्वस्य उक्तार्थे पर्यवसानेन पर्यवसितार्थस्यैव स्वतस्त्वरूपतया तस्योक्तरीत्या शब्दार्थतोपपादनमफलमेव ।

नवीनास्तु तादृशसामग्रीजन्यग्रह एव यावत्त्वं विशेषणम् । अत एव च दीधितिकारेण(१) यावदिति फलतो ग्रहविशेषणमित्युक्त्वा तादृशग्रहनिष्ठं यावत्त्वं तादृशग्रहत्वव्यापकत्वपर्यवसितमित्याशयेन तादृशग्रहत्वव्यापकविषयिताकत्वमिति यावदित्युक्तम् । अत्र तादृशग्रहत्वव्यापकत्वेन विषयितोपादानं विषयितासम्बन्धेन व्यापकत्वलाभाय ज्ञानग्राहकसामग्रीजन्यग्रहत्वं च ज्ञानग्रहत्वपर्यवसन्नम् । तथा च तादृशज्ञानग्रहत्वसमानाधिकरणभेदीयप्रतियोगितानिरूपिताया विषयितासम्बन्धावच्छिन्नावच्छेदकता तच्छून्यत्वम् । विधिकोटिः परेषाम् । तादृशप्रतियोगितावच्छेदकत्वं चास्माकं साध्यमिति पर्यवसितम् । तेन पक्षीभूतप्रामाण्ये तादृशभेदीयस्वरूपसम्बन्धाद्यवच्छिन्नप्रतियोगितावच्छेदकत्वस्योभयसिद्धत्वेऽपि न क्षतिः । तादात्म्यस्य व्याप्यताघटकत्वे तु तादृशग्रहवृत्तिपर्यवसिततादृशग्रहसमानाधिकरणेत्याद्येव सम्यक् । तादृशभेदप्रतियोगितावच्छेदकत्वाभावरूपं साध्यं परैः पक्षतावच्छेदकावच्छेदेन साधनीयम् । तेन विशिष्टप्रामाण्यत्वघटकीभूतघटत्वप्रकारितात्वाद्यवच्छेदेन तादृशज्ञानग्रहत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावस्योभयवादिसिद्धत्वेऽपि न क्षतिः । न चैवमपि तादृशभेदप्रतियोगितावच्छेदकत्वाभावावच्छेदकत्वस्य घटत्वप्रकारितात्वादावुभयवादिसिद्धत्वे विशिष्टप्रामाण्यत्वरूपपक्ष-

(१) रघुनाथशिरोमणिना ।

तावच्छेदकतापर्याप्त्यधिकरणधर्मेऽपि तादृशाभावावच्छेदकत्वमुभयवादिसिद्धम् । विशिष्टप्रामाण्यत्वस्य घटत्वप्रकारितात्वाद्यनतिरेकादिति सिद्धसाधनतादवस्थ्यमिति वाच्यम् । यतः पक्षतावच्छेदकावच्छेदेन साध्यानुमितौ पक्षतावच्छेदकेऽवच्छेदकतासम्बन्धेन साध्यं न पारतंत्र्येण प्रकारः अपि तु साध्यतावच्छेदकावच्छिन्नांश एवावच्छिन्नत्वसम्बन्धेन पक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मः प्रकार इत्युपेयते । तथा च विशेष्यीभूतघटत्वप्रकारितात्वादौ तादृशाभावावच्छेदकत्वस्योभयवादिसिद्धत्वेन घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारितात्वादिरूपपक्षतावच्छेदके तादृशावच्छेदकत्वस्योभयवादिसिद्धत्वेऽपि निरुक्तविशिष्टप्रामाण्यत्वनिरूपितविलक्षणाया अवच्छेद्यतायास्तादृशावच्छेदकत्वाभावरूपव्यापकत्वे नैयायिकैरनभ्युपगमान्न सिद्धसाधनावकाशः । शुद्धघटत्वप्रकारितात्वादिनिरूपितावच्छेद्यतातो विशेणविशेष्योभयपर्याप्तावच्छेदकतानिरूपकत्वरूपाया विशिष्टप्रामाण्यत्वनिरूपितावच्छेद्यताया वैलक्षण्यं शुद्धघटत्वप्रकारितात्वादिविशिष्टविषयकज्ञानेऽपि विषयितासम्बन्धेन विशिष्टप्रामाण्यत्वविशिष्टवद्भेदोपगमादक्षुण्णम् ।

अथ ज्ञानभेदेन प्रामाण्यभेदे तत्तद्व्यक्तित्वावच्छेदेन तद्वद्भेदेन ज्ञानत्वेन तदभेदेऽपि तत्तज्ज्ञानीयत्वविशिष्टतत्तत्प्रामाण्यत्वावच्छेदेन तादृशभेदप्रतियोगितावच्छेदकीभूते निरुक्तप्रामाण्ये तादृशभेदप्रतियोगितावच्छेदकत्वाभावस्तादृशशुद्धप्रामाण्यत्वावच्छेदेनापि बाधितः । प्रतियोगिताया इवावच्छेदकताया व्याप्यवृत्तित्वस्य दीधितिकारानुमतत्वादिति चेत्—

न । स्वसमानाधिकरणान्योन्याभावप्रतियोगिसाध्यवत्त्वत्वरूपव्याप्तिलक्षणस्य वह्न्यादिसाध्यकेऽव्याप्तिमाशंक्य यद्रूपाव-

च्छिन्नं साधनसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकं तद्रूपावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यनेन तादृशशंकां समाहितवता दीधितिकृता प्रतियोगितावच्छेदकताया अव्याप्यवृत्तित्वस्याभ्युपगमात्। अन्यथा तत्तद्वह्नित्वादिना हेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकस्य वह्न्यादेः शुद्धवह्नित्वाद्यवच्छेदेनापि तादृशप्रतियोगितावच्छेदकत्वाभावासंभवेनाव्याप्त्युद्धारासंभवादिति वदन्ति।

केचित्तु प्रामाण्यं पक्षीकृत्य तादृशज्ञानग्रहत्वव्यापकतावच्छेदकघटत्वादिमद्विशेष्यकत्वावच्छिन्नघटत्वादिप्रकारकत्वनिरूपितत्वविशिष्टविषयितात्वघटत्वादिविषयितात्वान्यतररूपवद्विषयिताकत्वकोटिका विप्रतिपत्तिः घटत्वादौ विधिप्रसिद्ध्येऽन्यतरत्वेन निवेशः। यद्वा प्रामाण्यानिरूपितत्वविशिष्टविषयितात्वं पक्षीकृत्य तादृशज्ञानग्रहत्वव्यापकतावच्छेदकत्वकोटिका विप्रतिपत्तिरतो न दोष इति वदन्ति।

आधुनिकास्तु तादृशज्ञानग्रहनिष्ठाभावप्रतियोगितात्वावच्छिन्नं पक्षीकृत्य विशिष्टप्रामाण्यविषयितात्वानवच्छिन्नत्वकोटिकाविप्रतिपत्तौ तात्पर्यान्न काप्यनुपपत्तिरिति प्राहुरिति दिक्।

अत्रेदं ज्ञानमप्रमेयप्रामाण्यग्रहसमवहितज्ञानग्राहकसामग्र्या प्रामाण्याग्रहाद्बाधवारणायाप्रामाण्याग्राहकत्वं सामग्रीविशेषणम्। तत्वं चाप्रामाण्यग्रहासमवहितत्वम्। न चाप्रामाण्यस्य भ्रमत्वप्रमात्वाभावरूपतया द्वैविध्येनाननुगम इति वाच्यम्। द्विविधस्याप्रामाण्यस्य प्रामाण्यविरोधित्वेनानुगमात्। एवं च प्रामाण्यग्रहे व्यावर्तकधर्मदर्शनविधया घटत्वादिग्रहस्य विरोधितया मिश्रादिमते व्यवसायादिघटिताया ज्ञानग्राहकसामग्र्याः प्रामाण्यविरोधिनो घटत्वादेर्ग्रहेण समवहितत्वेन साध्याप्रसिद्धिरिति। तदि-

ति लुप्तसप्तमीकम्। तत्पदं स्वाश्रयपरम्। सप्तम्यर्थो विषयत्वम्। तेन स्वाश्रयविषयकप्रामाण्यविरोधिग्रहासमवहितत्वलाभ इति नोक्तदोषः।

न चान्यथाख्यात्यनङ्गीकर्तृगुरुमते तादृशग्रहाप्रसिद्ध्या साध्याप्रसिद्धिरिति वाच्यम्, स्वाश्रयाविषयतानिरूपिता या प्रामाण्यविरोधिनिष्ठविषयता तच्छालिव्यवहारजनकग्रहासमवहितत्वस्य विवक्षणात्। विषयता च व्यापारानुबन्धिनी। तेन शब्दात्मकव्यवहारस्य साक्षाद्विषयताशालित्वाभावेऽपि न क्षतिः।

गुरुमते भ्रमस्थले विभिन्नज्ञानगोचरयोरपि धर्मधर्मिणोर्विशेषणविशेष्यभावोपगमान्न दोषः। तादृशव्यवहारजनकग्रहस्तु तन्मते स्वातंत्र्येण तदुपस्थितिकालीनं स्वाश्रयरूपधर्मिज्ञानम्।

मुरारिमिश्रभट्टयोर्मते तु तथाविधविशिष्टज्ञानमिति बोध्यम्।

न चैवमपि तादृशाप्रामाण्यग्रहासमवहिततत्सामग्रीसमवहिततादृशसामग्र्या प्रामाण्याग्रहाद्बाधतादवस्थ्यमिति वाच्यम्। तादृशव्यवहारजनकग्रहतत्सामग्र्यन्यतरासमवहितत्वस्य विवक्षणेनादोषात्।

नन्वेवमपि ज्ञानत्वादिना घटादिज्ञानविषयकशाब्दबोधसामग्र्या ज्ञानपदात्मिकया यावदन्तर्गतया प्रामाण्याग्रहाद्बाधः। न च विषयविषयकत्वेन ज्ञानग्राहकत्वनिवेशान्न दोष इति वाच्यम्। तथापि घटज्ञानपदात्मिकया घटज्ञानत्वादिना घटज्ञानादिविषयकशाब्दबोधसामग्र्या प्रामाण्याग्रहाद्बाधस्य दुर्वारत्वात्।

किं च प्रामाण्याविषयिण्या अहं घटज्ञानवानित्यनुमितेः सामग्र्या घटज्ञानव्याप्यघटेच्छावानहमिति परामर्शात्मिकया प्रामाण्याग्रहाद्बाधो दुर्वार इति चेत्—

न। विषयविषयकत्वविशिष्टज्ञानविषयकत्वावच्छिन्नका-

र्यतानिरूपितकारणकत्वस्य तादृशसामग्र्यां विवक्षणात् । घटविषयकशाब्दत्वस्य घटपदज्ञानकार्यतावच्छेदकतया ज्ञानविषयकशाब्दत्वस्य च ज्ञानपदज्ञानकार्यतावच्छेदकतया विषयविषयकत्वविशिष्टज्ञानविषयकत्वस्य कस्यापि कार्यतानवच्छेदकत्वेनोपदर्शितघटज्ञानपदात्मकशाब्दसामग्रीमादाय बाधाभावात् । एवं व्यापकतावच्छेदकनिरूपितव्याप्तेरभावेनोक्तानुमितौ घटविषयकत्वादिभाने व्यापकतावच्छेदकत्वज्ञानस्य ज्ञानभाने च तन्निरूपितव्याप्तिज्ञानस्य हेतुतया घटविषयकज्ञानविधेयकानुमितित्वस्य कस्यापि कार्यतानवच्छेदकत्वेनोक्तपरामर्शात्मकानुमितिसामग्रीमादायापि न बाधः ।

अथैवं घटज्ञानं प्रमेत्यनुमितिसामग्रीमादाय सिद्धसाधनवारणाय यावत्पदमिति पूर्वोक्तमसंगतम् । तत्रापि ज्ञानभाने हेतुतावच्छेदकावच्छिन्नहेतुप्रकारकपक्षज्ञानस्य प्रामाण्यभाने च तन्निरूपितव्याप्तिज्ञानस्य हेतुतया कस्या अपि कारणताया उपदर्शितधर्मावच्छिन्नकार्य्यतानिरूपितत्वाभावेन तादृशसामग्र्या असंग्रहादिति चेत्—

न । तथापि प्रमापदनिरूपितशक्तिज्ञानात्मकतज्जन्यशाब्दसामग्रीमादाय सिद्धसाधनवारणाय यावत्पदस्यावश्यकत्वात् । तत्र शक्यतावच्छेदकेऽपि शक्तेः सत्वेन प्रमात्वेन प्रमाशाब्द एव शक्तिज्ञानस्य हेतुत्वात् । अत्र ज्ञानविषयकत्वस्य चक्षुःसंयोगादिकार्यतानवच्छेदकतया चक्षुःसंयोगादिनिष्ठकारणताया अतथात्वेन गुर्वादिमते बाध इति नाशंकनीयम् ।

स्वप्रकाशवादिगुरुमते घटादिविषयकज्ञानविषयकचाक्षुषज्ञानस्य स्वप्रकाशत्व- त्वस्य घटादिचक्षुःसंयोगकार्यतावच्छेदकत्वेन

वादिनो गुरोर्मतम्

मिश्रमते(१) च घटादिज्ञानविषयकमानसत्वस्य व्यवसायकार्यतावच्छेदकत्वेनाबाधात् । न चैवमपि भट्टमतासंग्रह इति वाच्यम् । ज्ञानातीन्द्रियत्ववादिभट्टमते ज्ञातताऽलिंगक-

ज्ञानातीन्द्रियत्ववादिनो भट्टस्य मतम्

मुरारिमिश्रमते ज्ञानं प्रत्यक्षम्

विद्यमानज्ञानविधेयकानुमितेरेव ज्ञानप्रत्यक्षस्थानाभिषिक्ततया मिश्रादिमते(२) ज्ञानप्रत्यक्षस्येव भट्टमते ज्ञानव्याप्यघटत्वप्रकारकज्ञाततावान्घट इत्याकारकपरामर्शजन्यवर्त्तमानज्ञानविधेयकानुमितेः प्रामाण्यविषयकतानियमेन तथाविधप्रामाण्यविषयकज्ञानविधेयकानुमितित्वे तथाविधपरामर्शकार्यतावच्छेदकताया अगत्यांगीकारात् ।

अत एव पक्षधरमिश्रा अपि 'विषयमविषयीकुर्वती या ज्ञानं

पक्षधरमिश्राणां मतम्

गृह्णाती'त्यादिना तथा च 'ज्ञानग्राहिकैव विषयग्राहिका न तु विषयग्रहार्थमन्यापेक्षा यस्यामिति पर्यवस्यती'त्यन्तग्रंथेनोपदर्शितार्थमुक्त्वा 'यथा च ज्ञानतालिंगकानुमानस्य ज्ञानग्राहकत्वेनैव विषयग्राहकत्वं तथा वक्ष्याम' इति ग्रन्थेन तथैवोक्तवन्त इति ।

अत एवमपि घटज्ञानविषयकशाब्दजनकयोग्यताज्ञानानुपूर्वीज्ञानाद्यात्मकसामग्र्यास्तथात्वेन तामादाय बाधतादवस्थ्यम् । घटज्ञानादिविषयकयोग्यताज्ञानादेर्घटज्ञानादिविषयकशाब्दत्वस्य कार्य्यतावच्छेदकत्वात् । एवं तत्पदनिरूपितशक्तिज्ञानस्य घटज्ञानादिविषयकशाब्दत्वावच्छिन्नजनकतया घटज्ञानादिविषयकशाब्दबोधजनकतत्पदनिरूपितशक्तिज्ञानात्मकसामग्र्यास्तथात्वेन तामादाय बाधो दुर्वारः ।

---

(१-२) मुरारिमिश्रमते इति यावत् ।

किं चानुमितौ व्यापकतावच्छेदकरूपेणैव विधेयभानेन ज्ञानत्वावच्छिन्ननिरूपितज्ञाततानिष्ठव्याप्तिज्ञानेन प्रामाण्यग्रहो भट्टमतेन सम्भवतीति तन्मते जन्मान्तरीयसंस्कारेण प्रामाण्यविशिष्टज्ञानस्य स्मरणं कल्पयित्वा प्रामाण्यविशिष्टज्ञानव्याप्यघटत्वप्रकारकज्ञाततावान् घट इति परामर्शादेव प्रामाण्यानुमितिरुपेया । एवं चोक्तरीत्या प्रामाण्यभाने व्यापकतावच्छेदकत्वज्ञानभाने तन्निरूपितव्याप्तिज्ञानस्य हेतुतया प्रामाण्यविशिष्टज्ञानविधेयकानुमितित्वस्योक्तपरामर्शकार्यतावच्छेदकत्वाभावेन तदात्मकसामग्र्या अतथात्वेन भट्टमतासंग्रहः ।

अपि चाहं घटज्ञानवानित्यनुमितिसामग्रीमादाय बाधो दुर्वारः । न च व्यापकतावच्छेदकभाने व्यापकतावच्छेदकत्वज्ञानं विधेयभाने तन्निरूपितव्याप्तिज्ञानं हेतुरिति तस्या अतथात्वान्न बाध इत्युक्तमेवेति वाच्यम् । तत्तद्धर्मविशिष्टानुमितित्वावच्छिन्नं प्रति तत्तद्धर्मावच्छिन्ननिरूपितव्याप्तिज्ञानहेतुतयैव निर्वाहे तथाकल्पने मानाभावादित्यनुपपत्तिः ।

यत्तु 'विषयमविषयीकुर्वती'त्यादिमिश्रग्रन्थस्य वक्ष्यमाणार्थतात्पर्यकतया न पूर्वोक्तानुपपत्तिः । तथा हि—विषयतासंसर्गावच्छिन्नप्रकारतानिरूपकत्वविशिष्टज्ञानविषयताकग्रहत्वानवच्छिन्ना तादृशग्रहत्वव्याप्या च या कार्य्यता तन्निरूपककारणघटिता सामग्री विवक्षणीया । भवति च स्वप्रकाशसामग्रीघटककारणं घटादिचक्षुःसंयोगस्तदीया कार्यता घटादिचाक्षुषत्वावच्छिन्नाविषयाङ्कितज्ञानविषयकत्वानवच्छिन्ना तद्व्याप्या चेति तादृशसंयोगघटितसामग्रीग्राह्यत्वमादाय प्रामाण्ये विधिप्रसिद्धिर्गुरुमते ।

मिश्रमते घटत्वादिप्रकारकत्वोपलक्षितज्ञानलौकिकप्रत्यक्षं प्रति घटादिज्ञानं कारणम् । तदीया कार्य्यता न घटत्वादिप्र-

कारकज्ञानत्वावच्छिन्नविषयताकग्रहत्वेनावच्छिद्यते प्रयोजनाभावात् । घटादिज्ञानवृत्तिलौकिकविषयताया घटत्वादिप्रकारकज्ञानत्वावच्छिन्नत्वनियमेन कार्यतावच्छेदककुक्षावप्रविष्टस्यापि तस्य धर्मस्यार्थसिद्धत्वात् । अत एव सा कार्यता तादृशग्रहत्वव्याप्या भवतीति तन्निरूपककारणघटिता भवत्यनुव्यवसायसामग्री । तदुक्तं मिश्रैः–'यद्येन विना न भासते तद्बोधकस्य तद्बोधकत्वनियमा'दिति । अस्यार्थः—यथा जातिर्व्यक्तिं विना न भासत इति जातिशक्तिरेव व्यक्तिं भासयति न तु व्यक्तिविषयकत्वं तज्जन्यतावच्छेदकं जातिप्रकारकत्वस्य कार्यतावच्छेदकस्य व्यक्तिविशेष्यतानिरूपितस्यैव प्रामाणिकतया व्यक्तिविषयकत्वस्यार्थसिद्धत्वात् । तथा घटादिज्ञानवृत्तिलौकिकविषयताया घटादिविषयतानिरूपिताया एव वास्तविकत्वात् । घटादिविषयतानिरूपकत्वं घटादिज्ञानवृत्तिलौकिकविषयतात्वव्यापकतया प्रमेयत्वादिवन्न जन्यतावच्छेदकमिति ।

भट्टमते घटत्वादिप्रकारकघटादिवृत्तिज्ञाततावानहमिति विद्यमानज्ञाततागोचरं पक्षधर्मताज्ञानम् । तथात्वेन ज्ञाता ज्ञाततैव वा घटादिज्ञानवृत्तिलौकिकविषयताकानुमितित्वावच्छिन्नं प्रत्येव हेतुः 'प्रकारे विवादो नाकार' इति मूलोक्त्या विद्यमानज्ञातता-लिङ्गकानुमितेर्लौकिकाविषयतोपगमात् ।

भट्टानां साक्षात्कारातिरिक्तेऽप्यनुपलब्धे ज्ञाने लौकिकविषयताया दृष्टचरत्वात् । घटादिज्ञानवृत्तिलौकिकविषयता तु घटत्वादिप्रकारकज्ञानत्वावच्छिन्नैव प्रामाणिकी तत्रार्थसिद्धः। स धर्मो न कार्यतावच्छेदककोटिप्रवेशमपेक्षते । तन्निर्वाहाय यो यद्वृत्तियत्प्रकारकज्ञाततावान् स तत्प्रकारकतद्विशेष्यकज्ञानवानिति सामान्यमुखव्याप्तिस्मरणमपेक्षते न वेत्यन्यदेतत् ।

न च रूपवत्त्वप्रकारितासंसर्गावच्छिन्नप्रकारताकत्वेनावच्छिन्ना प्रकारितासंसर्गावच्छिन्नघटत्वादिप्रकारताकत्वव्याप्या च या कार्य्यता तन्निरूपककारणघटिता प्रामाण्याश्रयग्राहिका सामग्र्येव विवक्षणीयेति वाच्यं, इष्टत्वात्। एवं च घटज्ञानपदादिघटितशाब्दसामग्रीमादाय न बाधः। तथा हि तादृशसामग्रीघटकं निरुक्तकारणं घटज्ञानादिवाक्यं वा ज्ञानपदं वा घटज्ञानपदयोराकांक्षाज्ञानं तदर्थयोर्योग्यताज्ञानं वा। नाद्यः, अन्यत्र क्लृप्तकारणेन घटपदादिना घटज्ञानादिवाक्यस्यान्यथासिद्धत्वात्। न द्वितीयः, ज्ञानगोचरशाब्दत्वावच्छिन्नाया ज्ञानपदजन्यतायाः प्रकारितासंसर्गावच्छिन्नघटत्वादिप्रकारताकत्वव्याप्यत्वाभावात्। न च घटज्ञानादिवाक्यादपि विषयलाभानुपपत्त्या ज्ञानगोचरशाब्दत्वावच्छिन्नाया जन्यताया विषयोपरक्तज्ञानविषयकत्वव्याप्यत्वमेवेति वाच्यम्। घटपदादिसमभिव्याहारादेव तल्लाभोपपत्तेः। न तृतीयः, घटपदज्ञानपदयोराकांक्षाया योग्यतायाश्च तथाज्ञानं घटविशेषितज्ञानशाब्दबुद्धित्वावच्छिन्नं प्रति जनकं भवतीति तदीयकार्यताया विषयविषयकत्वानवच्छिन्नत्वेनैव वारणात्। ननु तादृशप्रकारताकत्वानवच्छिन्ना तद्व्याप्या च या कार्यता तन्निरूपककारणघटिताभिः प्रकृतप्रामाण्याश्रयग्राहिकाभिर्यावतीभिर्ग्राह्यत्वं तादृशकार्य्यताश्रयेण प्रकृतप्रामाण्याश्रयज्ञानग्राहिणा यावता ज्ञानेन विषयीकृतत्वं वा साध्यं पर्य्यवसन्नम्। तथा च शरीरादिनिरूपितजन्यज्ञानत्वावच्छिन्नकार्यताश्रयेण घटज्ञानादिपदजन्यशाब्दज्ञानेन तत्प्रामाण्याग्रहात्तत्र बाधतादवस्थ्यम्। मिश्रमतेऽपि ज्ञानमितिशाब्दानुव्यवसायेन तादृशशाब्दस्वरूपविषयानिरूपिततथाविधकार्यताश्रयेण शाब्दविषयीभूतघटादिज्ञानग्राहिणा घटादिप्रामाण्याग्रहाद्बाधः। अथ घट-

प्रामाण्यस्य पक्षत्वे विषयतया घटत्वोपलक्षितघटप्रकारकत्वेनानवच्छिन्ना तद्व्याप्या च या कार्यता सा प्रवेशनीयेति । गुरुमते शरीरादिजन्यताया मिश्रमते ज्ञानमितिशाब्दानुव्यवसायनिष्ठकार्य्यतायाश्च व्युदास इति चेत्—

न। एवमपि घटज्ञानमितिशाब्दानुव्यवसायनिष्ठकार्यताया मिश्रमते वारयितुमशक्यत्वात्। यदि च प्रकृतप्रामाण्याश्रयज्ञानग्रहत्वावच्छिन्नत्वेनापि तादृशकार्य्यता प्रवेश्यते तदा गुरुमतासंग्रहः। न हि घटचक्षुःसंयोगादेस्तन्मते ज्ञानग्रहत्वं कार्य्यतावच्छेदकं किं त्वर्थसिद्धः स धर्मः। एवं च प्रकृतप्रामाण्याश्रयज्ञानग्रहत्वव्याप्यत्वेन कथितकार्य्यताया विवक्षणेऽपि न निस्तारः। घटज्ञानादिशाब्दबोधानुव्यवसायनिष्ठव्यवसायकार्य्यतायास्तथाप्यवारणात्। ग्राहकसामग्रीसाम्येन तत्र घटादिप्रामाण्यग्रहणाभ्युपगमेऽपि न गुरुमते तथाविधकार्यताप्रसिद्धिः । न हि घटादिचक्षुःसंयोगस्य घटादिचाक्षुषे ताद्रूप्येण कारणत्वम् । येन सा कार्य्यता घटत्वादिप्रकारकत्वव्याप्या स्यात् । किं तु द्रव्यचाक्षुषे सामान्यतः चक्षुःसंयोगः कारणम् । न पुनस्तदीया कार्यता तादृशप्रकारकत्वव्याप्येति कथं तद्घटिता सामग्री लभ्येत । मिश्रमतेऽपि घटादिज्ञानस्यानुव्यवसायं प्रति घटादिज्ञानत्वेन न कारणता किन्तु प्रत्यक्षसामान्ये विषयस्येति न तदीयापि कार्यता घटादिप्रकारकत्वव्याप्येति चेत् —

मैवम् । ज्ञानवृत्तिलौकिकीविषयताविषयाविषयतानिरूपितैवेति तज्ज्ञानवृत्तिलौकिकविषयताकप्रत्यक्षे तज्ज्ञानस्य विषयमुद्रया कारणतामादायैव मिश्रमते संगमनीयम् । गुरुमते घटादेर्विषयस्य तत्ताद्विषयकप्रत्यक्षे जनकत्वात् । भट्टमते च घटादिधर्मिकपरामर्शादेस्तद्धर्मिकानुमित्यादौ जनकत्वात्तथावि-

धकार्यतामादायैव संगमनीयम् । यावत्पदं च प्रामाण्योपस्थितिप्रामाण्यघटकयावत्पदार्थोपस्थितिसमनन्तरजन्यानुव्यवसायमादाय सिद्धसाधनवारणाय । यद्वा प्रमापदस्थले प्रशब्दोपसंहितमाधातोर्निरूढलक्षणानिर्वाहाय ज्ञानत्वविशिष्टे रूढिः पृथगाश्रयणीया विशिष्टस्याशक्ततया तत्र लक्षणाया अप्रयोगात् । प्रामाण्यस्वरूपे प्रकर्षे तु तस्य निरूढलक्षणालक्ष्यार्थविशिष्टस्यैव शक्यार्थस्य बोधे प्रमापदस्य सामर्थ्यं, योगरूढत्वात् । एवं च प्रमापदरूढिज्ञानजन्यताया ज्ञानशाब्दत्वमात्रावच्छिन्नायास्तादृशप्रकारकत्वानवच्छिन्नत्वात्, तद्व्याप्यत्वाच्च । तत्कार्यताश्रयप्रमापदजन्यशाब्दबोधविषयत्वेन सिद्धसाधनवारणाय यावत्पदम् । एवं च तत्पदनिरूपितशक्तिज्ञानस्य घटज्ञानादिविषयकशाब्दज्ञानत्वावच्छिन्नायास्तादृशप्रकारताकत्वावच्छिन्नत्वात्तद्घटितसामग्र्या व्युदासान्न तामादाय बाधः । एवमहं घटज्ञानवानित्यनुमितिसामग्रीमादायापि न बाधः । तज्जन्यताया अपि तादृशप्रकारताकत्वावच्छिन्नत्वादिति मैथिलैरुक्तम्—

तदसत् । तथापि घटज्ञानमित्याद्दिशाब्दबोधव्यक्तेः पुनरुत्पादवारणाय तत्तद्व्यक्तित्वेन पदार्थोपस्थितेः प्रागभावविशेषस्य वा कारणतया तत्कार्यतायास्तादृशप्रकारताकत्वानवच्छिन्नत्वात्तव्याप्यत्वाच्च बाधतादवस्थ्यात् । एवं तादृशशाब्दबोधानुव्यवसायेन द्रव्यज्ञानमितिशाब्दबोधानुव्यवसायेन च सुतरां घटप्रामाण्याग्रहेण बाधतादवस्थ्याच्च । तस्मादुपदर्शितपक्षधरमिश्रोक्तरीत्या न निर्वाह इति तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन यद्भट्टमतसिद्धं तद्भिन्नग्राहकान्तार्थ इति दीधितिकृतः ।

अत्र च नोक्तशाब्दादिसामग्रीमादाय बाधः । तस्याः प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धतया तद्भिन्न-

त्वाभावेन यावदनन्तर्गतत्वात् । अत्र गुरुमतसिद्धभिन्नत्वोक्तौ पदाजन्यघटज्ञानाद्युपस्थितिघटितशाब्दसामग्र्याः भट्टमतसिद्धत्वेऽपि पदोपस्थितार्थाविषयकशाब्दानभ्युपगन्तृगुरुमतासिद्धतया तामादाय भट्टमते बाधः स्यादिति तत्परित्यागः । न च भट्टमतेऽपि पदोपस्थितार्थाविषयकशाब्दबोधोऽसिद्ध इति वाच्यम् । तथा सति—

'पश्यतः श्वेतमारूपं ह्रेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः'(१) ।

इत्यादिग्रन्थेन खुरविक्षेपशब्दादिलिङ्गकश्वेतोऽश्वपक्षकधावनानुकूलकृतिप्रकारकानुमित्यनन्तरं धावनानुकूलकृतिमन्तं श्वेताश्वं शृणोमीत्यनुव्यवसायानुरोधेन भट्टानां तादृशशाब्दबोधाभ्युपगमस्यासंगत्यापत्तेः। एवं मिश्र(२)मतसिद्धभिन्नत्वस्य नैयायिकमतसिद्धभिन्नत्वस्य वोक्तावप्युक्त एव दोष इति तस्यापि परित्यागः ।

अत्र भट्टगुरुमतसंग्रहाय प्रतियोगिकोटौ यथाक्रमं तृतीयान्तद्वयम् । भट्टमते ज्ञाततापत्यक्षजनकसामग्रीमादाय बाधवारणायानुयोगिकोटौ ज्ञानग्राहकेति स्वाश्रयग्राहकार्थकम् । तेन न साध्याप्रसिद्धिः । अथैवमपि घटज्ञानाविषयकशाब्दानुव्यवसायसामग्रीमादाय मिश्रमते(३) बाधः । तस्याज्ञानातीन्द्रियत्ववादिभट्टमतासिद्धत्वादिति चेत्—

न । तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च या भट्टमतसिद्धा सामग्री तद्भिन्ना तादृशसामग्रीजन्यं

---

(१) कारिकेयं गङ्गेशोपाध्यायेनापि तत्त्वचिन्तामणौ शब्दखण्डे उद्धृता ।

(२-३) मुरारिमिश्र-

यजूज्ञानं तद्विषयकग्रहाजनिका स्वाश्रयग्रहजनिका यावती सामग्री तद्ग्राह्यत्वस्य साध्यतयोक्तसामग्र्यास्तादृशसामग्रीजन्यघटज्ञानशाब्दविषयकानुव्यवसायजनकत्वेन तथाविधग्रहाजनकत्वाभाववत्तया यावदनन्तर्गतत्वात् । अत्र सामग्रीग्राह्यत्वघटके सामग्रीजन्यज्ञानेऽप्रामाण्यग्रहासमवहितत्वमपि निवेश्यते । न घटत्वाभाववति घटत्वप्रकारकत्वरूपाप्रामाण्यांशे उपनीतभानरूपघटज्ञानानुव्यवसायसामग्रीमादाय न मिश्रमते बाधः । अथैवमपि यत्र भाविज्ञानमप्रमेयप्रामाण्यज्ञानं तत अभावः । प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभाववानितिबाधबुद्धिरपेक्षाबुध्यात्मिका । तत अप्रामाण्योपनीतभानं ततो घटप्रत्यक्षं ततोऽनुव्यवसायस्तत्र तादृशानुव्यवसायसामग्रीमादाय मिश्रमते बाधो दुर्वारः । तत्र बाधरूपप्रतिबन्धकसत्वेनानुव्यवसायेऽप्रामाण्यभानासम्भवेनाप्रामाण्यग्रहासमवहितत्वस्य तत्र सत्वादिति चेत्—

न । अप्रामाण्यग्रहासमवहितत्वस्य सामाग्र्यामपि निवेशनीयत्वात् । अप्रामाण्यग्रहश्चोक्तरीत्याऽप्रामाण्यव्यवहारजनको ग्रहः । स च गुरुमतेऽसंसर्गाग्रहकालीनं ज्ञानद्वयं, मिश्रादिमते विशिष्टज्ञानामिति ।

ननु गुरुमते स्वर्गकामो यजेतेत्यत्र स्वर्गकामकर्तव्यताबोधविषयो याग इति नियोज्यान्वयबोधे पदादनुपस्थितमपि इष्टसाधनताज्ञानविशेष्यत्वमन्वयप्रयोजकरूपवत्वरूपयोग्यताविधया भासते । अर्थाध्याहारवादिगुरुमते(१) तत्र पदानुपस्थिततज्ज्ञान-

(१) अश्रुतपदानामनुसन्धानमध्याहारः । यथा घटमानयेत्युक्ते त्वमितिपदस्याध्याहारः । स च द्विविधः–शब्दाध्याहारः अर्थाध्याहारश्चेति । तत्र नैयायिकैः शब्दाध्याहार एव स्वीक्रियते न त्वर्थाध्याहारः । मीमांसकैस्तु अर्थाध्याहार स्वीक्रियत इति ।

संभवात्। एवं च निरुक्तभट्टमतसिद्धाभिन्नतादृशान्वयबोधसामग्री-
मादाय गुरुमते इष्टसाधनत्ववति इष्टसाधनत्वप्रकारकत्वरूपप्रा-
माण्ये बाधः। न चोक्तयोग्यताज्ञानस्य शाब्दजनकतोपगन्तृभट्ट-
स्येष्टसाधनताज्ञानविशेष्यत्वज्ञानादिघटिततादृशान्वयबोधसामग्री-
संमतैवेति वाच्यम्। पदजन्यशाब्दबोधे पदोपस्थितार्थस्यैव
भानमुक्तयोग्यताया शाब्दविषयत्वं चोपगच्छतो भट्टस्य पदज-
न्योक्तयोग्यताज्ञानघटितसामग्र्या एव संमततया गुरुमतासिद्ध-
पदाजन्यतादृशयोग्यताज्ञानघटिततादृशशाब्दसामग्र्या भट्टास-
म्मतत्वादिति चेत्--

मैवम्। गुरुमतेऽन्वयप्रयोजकरूपवत्त्वरूपयोग्यतायाः शा-
ब्दाविषयत्वानियमाभावेन पदाजन्योक्तयोग्यताज्ञानघटिततादृ-
शशाब्दसामग्र्या गुर्वसंमततया गुरुमते उक्तरीत्या बाधासंभ-
वादिति।

केचित्तु 'दीधितौ तज्ज्ञानप्रामाण्याग्राहकत्वेनेत्यादि अग्रा-
हकान्ते'ति तदप्रामाण्याग्राहकेतीत्यर्थः। तदप्रामाण्यग्रहसमवहि-
तसामग्र्यास्तत्प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतासिद्धत-
या तद्वारकतयोपात्तस्य तदप्रामाण्याग्राहकेत्यस्य तज्ज्ञानप्रामा-
ण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतासिद्धाभिन्नार्थकत्वं
घटज्ञानं गुण इत्यादिशाब्दसामग्रीवारणायावश्यकमिति भावः।
अत्र तज्ज्ञानप्रामाण्याग्राहकत्वं तज्ज्ञानप्रामाण्यग्रहानुपधायक-
त्वम्। तेन तज्ज्ञानाप्रामाण्यग्रहसमवहिताया ज्ञातताल्लिङ्गकानु-
मितिसामग्र्यास्तज्ज्ञानप्रामाण्यग्रहस्वरूपयोग्यत्वेन भट्टमतासि-
द्धतया तज्ज्ञानप्रामाण्यग्रहस्वरूपायोग्यत्वेन ज्ञानग्राहकत्वेन भट्ट-
मतसिद्धभिन्नत्वेऽपि न क्षतिः।

नन्वप्रामाण्यग्रहसमवहिताया ज्ञानग्राहकत्वेन गुरुमतासि-

द्धाया व्यवसायसामग्र्या ज्ञानग्राहकत्वेन गुरुभट्टातिरिक्तमात्रमतसिद्धायास्तथाऽनुव्यवसायसामग्र्याश्च तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नायाः प्रकृतप्रामाण्याग्राहकत्वादुबाधो दुर्वारः । न च स्वातन्त्र्येण तदप्रामाण्याग्राहकत्वमनुयोगिनि ज्ञानग्राहके विशेषणमुपादेयमिति वाच्यम् । तादृशभिन्नत्वे तदप्रामाण्याग्राहकत्वार्थत्वोक्तिविरोधादिति चेत्—

मैवम् । तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धपदस्य प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन यद्भट्टमतासिद्धप्रकृतप्रामाण्यग्रहविरोध्यसमवहितत्वं तदुभयाभावत्वेन तादृशासिद्धत्वप्रतियोगिकाभावपरत्वात् । प्रामाण्यग्रहविरोध्यप्रामाण्यसमवहितयोर्व्यवसायानुव्यवसायसामग्र्योर्निरुक्तरूपेण भट्टमतासिद्धत्वेऽपि प्रकृतप्रामाण्यग्रहप्रतिबन्धकसमवहितत्वेन निरुक्तोभयाभावस्याक्षततया तद्वद्भिन्नत्वाभावात् प्रामाण्याग्राहकत्वेन भट्टमतसिद्धायाः प्रामाण्यग्राहकत्वेन गुरुमतसिद्धाया व्यवसायसामग्र्याः संग्रहायोभयाभावप्रतियोगिकोटौ ज्ञानग्राहकत्वोपादानम् । प्रामाण्यग्राहकत्वेन भट्टमतसिद्धाया ज्ञाततालिंगकानुमितिसामग्र्या ज्ञानग्राहकत्वेन भट्टमतसिद्धायास्संग्रहायोभयाभावप्रतियोगिकोटौ प्रामाण्याग्राहकत्वोपादानम् । ज्ञातताप्रत्यक्षजनकसामग्र्या ज्ञानग्राहकत्वेन भट्टमतासिद्धाया व्यावर्त्तनायानुयोगिनि ज्ञानग्राहकत्वोपादानम् । न चैवं विषयबाधभ्रम(१)कालीनेत्याद्यग्रिमदीधितिग्रन्थासंगतिः । तादृशविषयबाधभ्रमकालीनानुव्यवसायसामग्र्याः प्रकृतप्रामाण्यग्रहप्रतिबन्धकविषयबाधग्रहसमवहिततया निरुक्तोभयाभाववत्त्वेन तज्जन्यानुव्यवसायस्य यावदन्तःपातित्वासंभवादिति वाच्यम् । प्रकृत-

(१) नायं घट इत्यादिभ्रमाव्यवहितोत्तरोत्पन्नेत्यर्थः ।

प्रामाण्यग्रहप्रतिबन्धकताया विषयबाधग्रहव्यावृत्ताया एवोभया-
भावप्रतियोगिकोटौ निवेश्यत्वात् । तथा हि सर्वासामेव व्यव-
सायानुव्यवसायादिसामग्रीणां प्रकृतप्रामाण्यावगाहिसमूहाल-
म्बनग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताश्रययत्किंचिद्विषय-
बाधग्रहकालीनत्वसंभवेन तादृशप्रतिबन्धकताश्रयासमवहितसा-
मग्र्या एव दुर्लभतया प्रकृतप्रामाण्यग्रहप्रतिबन्धकत्वस्य विषयबा-
धग्रहसाधारणप्रकृतप्रामाण्यग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्ध-
कतारूपत्वासंभवेन प्रकृतप्रामाण्यप्रकारताशालिग्रहत्वनिष्ठस्वरू-
पसम्बन्धरूपावच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबन्धकतारूप-
स्यैवावश्यं विवक्षणीयत्वात् । न च स धर्मितावच्छेदकप्रामाण्य-
प्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य वि-
षयबाधग्रहसाधारणस्य निवेशेनैव सर्वसामंजस्ये तद्व्यावृत्तप्र-
तिबन्धकतानिवेशनफलमिति वाच्यम् । स्वरूपसम्बन्धरूपावच्छे-
दकताघटितस्य तस्य निवेशापेक्षया व्यापकत्वरूपावच्छेदकत्व-
घटितस्य तस्य गुरुत्वात् । न चोभयाभावप्रतियोगितावच्छेदक-
कोटौ निरुक्तविषयबाधग्रहव्यावृत्तप्रतिबन्धकत्वं निवेशनीयम् ।
विषयबाधग्रहेण समवहिताया अनुव्यवसायसामग्र्या व्यावर्त्तना-
य तदभाववत्त्वमनुयोगिसामग्र्यां विशेषणं वाच्यम् । इत्युभयथा
प्रतिबन्धकत्वनिवेशापेक्षया एकथैव निरुक्तगुरुतरप्रतिबन्धकत्व-
स्योभयाभावप्रतियोगिकोटौ निवेशे लाघवस्यानपाय इति वा-
च्यम् । स धर्मितावच्छेदकप्रामाण्यग्रहत्वस्य ज्ञाननिष्ठेदन्त्वादि-
धर्मितावच्छेदककाप्रामाण्यग्रहाप्रतिबध्यधर्मान्तरधर्मितावच्छेदकक-
प्रामाण्यग्रहसाधारणतया तद्व्यापकत्वस्याप्रामाण्यग्रहप्रतिबध्यता-
यामसंभवेनाप्रामाण्यग्रहकालीनतत्तत्सामग्रीव्यावृत्त्यनुपपत्तेः । न
च तत्तज्ज्ञाननिष्ठेदन्त्वादिधर्मितावच्छेदककप्रामाण्यप्रकारताशा-

लिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य तत्तद्धर्मि-तावच्छेदककाप्रामाण्यग्रहसाधारणस्य निवेशेनैव विषयबाधग्रह-कालीनतत्तत्सामग्र्यव्याप्तिसंभवे तदर्थं सामग्र्यां विषयबाधग्र-हाभावनिवेशनमनुचितमिति वाच्यम् । ज्ञानभेदेन प्रामाण्यभेद-मते तत्तज्ज्ञाननिष्ठेदन्त्वादेर्विशिष्यसाध्यकोटौ निवेशेन सर्वसा-मंजस्येऽपि ज्ञानभेदेन प्रामाण्याभेदमते तत्तज्ज्ञाननिष्ठेदंत्वादि-र्विशिष्य साध्यकोटौ निवेशे ज्ञानान्तरनिष्ठेदंत्वादिधर्मितावच्छेदक-काप्रामाण्यग्रहस्य तत्तज्ज्ञाननिष्ठेदन्त्वादिधर्मितावच्छेदककप्रा-माण्यग्रहाप्रतिबन्धकतया तत्समवाहिततादृशज्ञानान्तरग्राहकसा-मग्र्या व्याप्त्यनुपपत्त्या बाधपरीहारस्याशक्यत्वेन तादृशस्वरू-पसम्बन्धरूपावच्छेदकताकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य निरुक्तोभयाभावप्रतियोगिकोटौ निवेशे दीधितिकाराभिप्राया-दिति प्राहुः ।

नवीनास्तु 'विषयमविषयीकुर्वती' त्यादिमिश्रग्रन्थस्य स्वनि-रूपकविषयविषयितानवच्छिन्नकारणताप्रतियोगिककार्यतावच्छे-दिका या विषयिता तन्निरूपितप्रकृतप्रामाण्याश्रयविषयिताशा-लिग्रहसामग्र्येव ज्ञानग्राहकसामग्रीपदेन विवक्षणीयेत्यत्र तात्प-र्यम् । अनुव्यवसायनिष्ठा ज्ञानविषयतानिरूपितविशेष्यित्वप्रका-रित्वविषयिता व्यवसायजन्यतावच्छेदिका पुरोवर्तिविशेष्यकत्वा-वच्छिन्नघटत्वादिप्रकारकत्वप्रकारितानिरूपितज्ञाननिष्ठलौकिक-विषयिताशालिप्रत्यक्षत्वाद्यवच्छिन्नं प्रति पुरोवर्तिविशेष्यकघटत्व-प्रकारकज्ञानत्वादिना व्यवसायस्य हेतुत्वात् । तादृशीव्यवसा-यकारणता च न विशेष्यित्वादिविषयितावच्छिन्ना तदवच्छेद-ककोटौ विशेष्यितादेरप्रवेशात् । तथा च तादृशीविशेष्यित्वा-दिविषयतैव तथाविधं स्वं तन्निरूपितज्ञानविषयिताशालित्वमनु-

व्यवसायरूपज्ञानग्रहस्याक्षतम्। एवं गुरुमते स्वप्रकाशरूपव्यवसायीयविशेष्यित्वादिविषयितापि तादृशं स्वं तस्याव्यवसायसामग्रीजन्यतावच्छेदकत्वात्तादृशसामग्रीनिष्ठकारणतावच्छेदककोटौ च विशेष्यित्वादिविषयितायाः अनिवेशादतस्तन्मते व्यवसायसामग्र्याः संग्रहः। एवं भट्टमते प्रत्यक्षस्थानाभिषिक्तज्ञाततालिंगकानुमितौ विषयविषयितानवच्छिन्नशुद्धज्ञानत्वावच्छिन्नव्यापकतावगाहिपरामर्शीयजन्यताया एव पुरोवर्त्तिविशेष्यकत्वादिविषयितावच्छिन्नत्वात्तादृशविषयितामादाय निरुक्ततदनुमितेर्निरुक्तज्ञानविषयिताशालितया तत्सामग्रीपरिग्रहः। इच्छादिलिंगकज्ञानानुमितौ च परामर्शादिनिष्ठयद्यत्कारणतानिरूपितकार्यतावच्छेदिका यद्यद्विषयविषयिता तत्तत्कारणतावच्छेदकोटौ तत्तद्विषयविषयिताप्रवेशस्यावश्यकतया न कापि विषयिता तादृशं स्वमिति तत्सामग्रीव्युदासः। शाब्दबोधसामग्र्या अप्येवंरीत्या व्युदासो बोध्यः। एवं सति प्रमापदघटितसामग्र्या असंग्रहेऽपि पृथिवीतिज्ञाने जात इत्यादिमिश्रोक्तरीत्योदीच्यानुव्यवसाये प्रामाण्यभानात्तत्सामग्रीमादाय सिद्धसाधनस्य वारकतयैव यावत्पदसार्थक्यम्। तत्र प्रामाण्यविषयितान्तःपातिन्या अलौकिकविशेष्यित्वादिविषयितायाः विशेष्यित्वादिरूपविषयविषयितावच्छिन्नज्ञानसंनिकर्षनिरूपितजन्यतावच्छेदिकायास्तादृशविषयविषयितानवच्छिन्नकारणतानिरूपितकार्य्यतानवच्छेदकत्वेऽपि पुरोवार्त्तिविशेष्यकत्वादिनिरूपितायाः व्यवसायजन्यतावच्छेदकविषयितायाः निरुक्तकार्यतावच्छेदकत्वात्तामादाय तत्सामग्रीपरिग्रहात् उपनीतघटज्ञानविषयकपटज्ञानानुव्यवसाये घटज्ञानविषयिता न निरुक्तकार्यतावच्छेदकीभूतविशेष्यत्वादिविषयितानिरूपिता अपि तु घटज्ञानीयलौकिकविषयतैव। अतो न तत्सा-

मग्रीमादाय तद्घटज्ञानप्रामाण्ये बाधः। यदि च घटज्ञानानुव्यवसाये लौकिकसन्निकर्षबलभासमानघटविषयकत्वोपरक्तोपनीतघटज्ञानविषयितामादाय तत्र बाधः सम्भाव्यते तदा तत्कार्यतावच्छेदकत्वं निरुक्तज्ञानविषयितायामपि निवेश्यम्। उक्तस्थले च घटज्ञानविषयिता न निरुक्तकार्यतावच्छेदिकेति न दोष इति पक्षधरमिश्रोक्तरीतिमेव परिष्कुर्वन्ति।

अन्ये तु प्रामाण्यप्रकारत्वानिरूपितालौकिकविषयिताभिन्ना या प्रकृतप्रामाण्याश्रयज्ञानवृत्तिर्विषयता तन्निरूपकयावज्ज्ञानग्राह्यत्वमेव विधिकोटिस्तादृशी च विषयता प्रामाण्यप्रकारतानिरूपितविशेष्यतास्वरूपालौकिकविषयतास्वरूपा च भवतीति तन्निरूपकत्वेन प्रमापदजन्यबोधः। स्वप्रकाशानुव्यवसायादिश्च परिगृह्यते। एवं च ज्ञाततालिङ्गकानुमिते लौकिकविषयतानिरूपकत्वेन प्रामाण्यप्रकारतानिरूपितविषयताकत्वेन वोपग्रहः। प्रकृतप्रामाण्याश्रयज्ञानेत्यत्र प्रामाण्यं मुख्यविशेष्यताघटितमेवोपादेयम्। तेन घटज्ञानमितिशाब्दबोधवृत्तिरनुव्यवसायस्य लौकिकविषयतामुख्यविशेष्यताघटितप्रामाण्याश्रयवृत्तिरेव न भवतीति घटप्रामाण्यस्य तादृशानुव्यवसायाग्राह्यत्वेऽपि न बाध इति प्राहुरित्यलमतिविस्तरेण।

यद्वा प्रामाण्यं तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यं न वेति विप्रतिपत्तिः। तत्पदं स्वाश्रयपरं ग्राह्यत्वं विषयत्वम्। अत्र प्रामाण्यस्य स्वाश्रयाविषयकज्ञानाजन्यव्यवसायप्रथमानुव्यवसायाभ्यां ग्रहाद्गुरुमिश्रमतसङ्ग्रहः। यो यत्प्रकारकज्ञाततावान् स तत्प्रकारकज्ञानवानिति सामान्यमुखव्याप्तिज्ञानसहितज्ञाततानिष्ठपक्षधर्मताज्ञानेन पक्षधर्मताबलात्प्रकृतप्रामाण्याश्रयज्ञानविधेयकानुमित्युत्पत्त्या भट्टमतसङ्ग्रहः। अथ नैयायिकमते वस्तुमा-

अस्य तादृशेश्वरज्ञानविषयतया निषेधकोटेरप्रसिद्धिरिति चेत्—

न। जन्यज्ञानव्यक्तिं तद्व्यक्तित्वेनोपादाय तत्समानाधिकरणत्वस्यांत्यज्ञाने निवेशात्। न चैवमपि तादृशज्ञानमात्रस्यैव तादृशेश्वरज्ञानजन्यतयाऽप्रसिद्धितादवस्थ्यमिति वाच्यम्। मध्यमज्ञानेऽपि तन्निवेशात्। न चेश्वरानङ्गीकर्तृमीमांसकमते तद्वैयर्थ्यमुपरञ्जकतया तत्सार्थक्यात्। उपरञ्जकत्वं चोद्देशीभूततथाविधविशेषणघटितसाध्यविषयकानुमितिविषयत्वम्। एतन्मूलक एव व्यापकेन व्यर्थविशेषणत्वमिति प्रवादोऽपि।

यत्तु मध्यमान्त्यं ज्ञानयोर्जन्यत्वनिवेशान्नोक्ता प्रसिद्धिरिति तत्—न। जन्यत्वमुत्पत्तिमत्वादिरूपं प्रागभावप्रतियोगित्वरूपं वा? नाद्यः, गौरवात्। नान्त्यः, गुरुभिः प्रागभावानङ्गीकारेण साध्याप्रसिद्धेः। अत एव स्वाश्रयविषयकज्ञानप्रागभावाप्रयुक्तप्रागभावप्रतियोगिज्ञानग्राह्यं न वेति उपदर्शितविप्रतिपत्तिनिष्कर्षः। तथाविधप्रागभावप्रयुक्तत्वं च तथाविधप्रागभावव्यतिरेकानुविधायित्वम्। तच्च तथाविधप्रागभावव्यतिरेकनाशाधिकरणक्षणध्वंसानधिकरणत्वे सति तथाविधप्रागभावव्यतिरेकाधिकरणक्षणध्वंसाधिकरणक्षणोत्पन्नव्यतिरेकप्रतियोगित्वम्। प्रागभावव्यतिरेकस्य प्रागभावप्रतियोगिरूपतया नाशोत्पत्त्यादेः सम्भवात्। प्रागभावस्यान्वयानुविधायित्वं तु न निवेशनीयम्। तन्निवेशे प्रयोजनाभावात्। अथ वा तज्ज्ञानोत्तरवर्तितज्ज्ञानसमानाधिकरणतज्ज्ञानभिन्नतज्ज्ञानविषयकज्ञानप्रागभावाव्यापकीभूतप्रागभावप्रतियोगिज्ञानग्राह्यं न वेति विप्रतिपत्त्यर्थनिष्कर्षः। अत्र प्रथमद्वितीयचतुर्थतज्ज्ञानपदानि पक्षीभूतप्रामाण्याश्रयज्ञानपराणि। तृतीयतज्ज्ञानपदं च पक्षीभूतप्रामाण्यग्राहकत्वेनाभिमतज्ञानपरम्। व्याप्यव्यापकभावघटकश्च कालिक-

विशेषणतासम्बन्धः। अत्र व्यवसायसमानाधिकरणो यो व्यवसायपूर्वोत्पन्नव्यवसायविषयकशाब्दबोधस्तत्प्रागभावस्य कालिकसम्बन्धघटितव्यापकताया अनुव्यवसायादिप्रागभावे सत्त्वेन स एव दोष इति तज्ज्ञानसमानाधिकरणत्वं तद्विशेषणम्। तथाविधानुव्यवसायात्मकज्ञानप्रागभावव्यापकताया अनुव्यवसायप्रागभावे सत्त्वेन तद्दोषवारणाय तज्ज्ञानभिन्नत्वं तद्विशेषणम्। यदि च कारणाभावप्रयुक्तः कार्याभाव इति प्रतीतिसिद्धं प्रयुक्तत्वं स्वरूपसम्बन्धविशेषोतिरिक्तं वेति मतं तदा तज्ज्ञानविषयकज्ञानप्रागभावाप्रयुक्तप्रागभावप्रतियोगिज्ञानग्राह्यं न वेति यथाश्रुतार्थ एव बोध्यः। एवं चेश्वरज्ञानमादाय नोक्ताप्रसिद्धिरिति पक्षधरमिश्रमतमप्यपास्तम्। गुरुभिः प्रागभावानभ्युपगमेन साध्याप्रसिद्धेः।

अथात्र घटादिविशेष्यकाभिधेयत्वप्रकारकं ज्ञानरूपसामान्यप्रत्यासत्तिजन्याभिधेयत्वप्रकारकयावदभिधेयविशेष्यकालौकिकप्रत्यक्षमादाय नैयायिकनये सिद्धसाधनं तादृशप्रत्यक्षस्य तज्ज्ञानविषयकज्ञानाजन्यत्वात्। न च तादृशयावज्ज्ञानग्राह्यत्वमेव विधिकोटिः। एवं च यावत्त्वस्य व्यापकत्वरूपतया तादृशज्ञानत्वव्यापकविषयिताप्रतियोगित्वस्य विधिकोटित्वपर्यवसानान्नोक्तसिद्धसाधनम्। तन्नये प्रामाण्यस्य व्यवसायाद्यग्राह्यत्वादिति वाच्यम्। तज्ज्ञानपदस्य प्रकृतप्रामाण्याश्रयज्ञानपरतया घटत्ववति घटत्वप्रकारकत्वरूपप्रकृतप्रामाण्यस्य तादृशप्रामाण्याश्रयज्ञानविषयकज्ञानाजन्यघटज्ञानाद्यग्राह्यतया बाधापत्तेः। न च तृतीयज्ञानेऽपि प्रकृतप्रामाण्याश्रयविषयकत्वनिवेशान्न पटज्ञानादिकमादाय दोष इति वाच्यम्। तथासत्ययं ज्ञानवानिच्छावत्त्वादित्यादौ ज्ञानत्वरूपेण प्रकृतप्रामाण्यानाश्रयज्ञानविषयक-

परामर्शजन्यया पक्षधर्मताबलेन प्रकृतप्रामाण्याश्रयज्ञानविषयि-ण्यानुमित्या प्रकृतपक्षीभूतप्रामाण्यस्याग्राह्यत्वेन बाधापत्तेः । तस्मात्तादृशयत्किञ्चिज्ज्ञानग्राह्यत्वस्यैव विधिकोटित्वमुपेयम् । तथा चोक्तसिद्धसाधनं दुर्वारमिति चेत् —

न । ग्राह्यत्वस्य प्रकारत्वार्थकतया सामान्यलक्षणाया स्वाश्रयमुख्यविशेष्यकज्ञानजनकत्वनियमेन तज्जन्यप्रत्यक्षमादाय सिद्धसाधनासम्भवात् ।

ननु प्रकारत्वविवक्षणेऽप्युक्तनियमे मानाभावेनोक्तसामान्यप्रत्यासत्तिजन्याभिधेयवदिति यावदभिधेयविषयकज्ञानमादाय नैयायिकनये सिद्धसाधनं दुर्वारमेव । किञ्च घटत्ववद्विशेष्यकत्वविशिष्टघटत्वप्रकारकत्वादिना पटज्ञानादिनिष्ठव्यापकतावगाहीच्छालिङ्गकभ्रमात्मकपरामर्शजन्या स्वाश्रये तादृशप्रामाण्यप्रकारकानुमितिमादाय नैयायिकनये सिद्धसाधनं दुर्वारम् । न च तन्मते विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतयोक्तज्ञानयोस्तज्ज्ञानविषयकज्ञानजन्यतया न ते आदाय सिद्धसाधनमिति वाच्यम् । जातित्वादिरूपेण घटत्वादिबुद्ध्यनन्तरं स्वरूपतो घटत्वादिविशिष्टबुद्धिवारणाय स्वरूपतो घटत्वादिविशिष्टबुद्धिं प्रति स्वरूपतो घटत्वादिज्ञानस्य हेतुत्वेऽपि स्वरूपतो जातिविशिष्टबुद्ध्यतिरिक्तस्थले तन्मतेऽपि तादृशहेतुत्वे मानाभावादिति चेत्—

न । विशिष्टबुद्धिमात्रे विशेषणज्ञानहेतुत्वमुपेत्यैतद्विप्रतिपत्तिकरणात् । अथैवमपि भट्टमतासङ्ग्रहः । तन्मते विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वेन सामान्यमुखव्याप्तिज्ञानादेव पक्षधर्मताज्ञानसहितात्पक्षधर्मताबलात्स्वाश्रयविषयकानुमितिरिति ज्ञानत्वावच्छिन्ननिरूपितघटवृत्तिघटत्वप्रकारकज्ञाततानिष्ठव्याप्तिज्ञानादेव घटत्ववद्विशेष्यकत्वविशिष्टघटत्वप्रकारकत्वरूपप्रामाण्यप्रकारकस्वा-

श्रयविषयकानुमितिरुत्पद्यते । तादृशज्ञाततविषयकपरामर्शस्य तथास्वभावादिति जन्मान्तरीयसंस्कारात् स्मृतस्य घटत्ववद्विशेष्यकत्वविशिष्टघटत्वप्रकारकत्वविशिष्टज्ञानस्य घटवृत्तिघटत्वप्रकारकज्ञाततादौ व्याप्तिज्ञानात्तादृशप्रामाण्यप्रकारकस्वाश्रयविषयकानुमितिरुत्पद्यत इति पक्षत्रयेऽपि तादृशानुमितेस्तज्ज्ञानविषयकज्ञानजन्यत्वनियमात् । एतेनान्यथाख्यात्यसङ्गीकर्तृभट्टमते प्रकृताप्रामाण्याश्रयज्ञानत्त्वेन पटज्ञानादिविषयकपरामर्शात्प्रकृतप्रामाण्यप्रकारकस्वाश्रयविषयकानुमितौ बाधकाभावेन तदनुमितिमादाय स्वतस्त्वनिर्वाह इत्यपि निरस्तम् । तदनुमितेरपि विशेषणज्ञानजन्यतयाऽतथात्वाद्भट्टैरन्यथाख्यातेरनङ्गीकाराच्चेति चेत्—

मैवम् । प्रकृतप्रामाण्यं स्वाश्रयविषयकोपदर्शितज्ञानजन्यत्वेन यन्नैयायिकमतसिद्धं तद्भिन्नं यदुपदर्शितज्ञानं तत्प्रकारो न वेति प्रकृतविप्रतिपत्तिनिष्कर्षेण नैयायिकानां ज्ञाततालिङ्गानुमितेरनुपगमेन तल्लिङ्गकानुमितिसामान्यस्यैव तन्मतसिद्धभिन्नतया भट्टमतासङ्ग्रहासम्भवात् । अत्र तादृशजन्यत्वेन मीमांसकमतसिद्धभिन्नत्वस्य भट्टमतसिद्धभिन्नत्वस्य वा निवेशे भट्टमतासङ्ग्रहः ।

एवमात्मविषयकेतरभिन्नत्वप्रकारकनिदिध्यासनजन्यादृष्टविशेषरूपयोगजधर्मप्रत्यासत्तिजन्यविश्वविषयकप्रत्यक्षमादाय नैयायिकमते सिद्धसाधनम् । तादृशप्रत्यक्षस्य मीमांसकैरनभ्युपगमादिति तत्परित्यागः । गुरुमतसिद्धभिन्नत्वस्य मिश्रमतासिद्धभिन्नत्वस्य वा निवेशोऽपि तथेति तस्यापि त्यागः । अत्र विधिप्रसिद्धिर्घटत्वादौ निषेधप्रसिद्धिस्तु ज्ञानज्ञानत्वादिनिर्विकल्पकमादाय ज्ञानादौ । तदनङ्गीकारे तु साध्ये धर्मत्वमपि नि-

वेश्यम् । तच्च वृत्तिमत्त्वम् । तथा च तदभावात्मकनिषेधको-
टिप्रसिद्धिर्गगनादावेव सुलभेति बोध्यम् ।

अत्र प्रत्यवतिष्ठन्ते नव्यतार्किकाः । पूर्वोपदर्शितरीत्या ता-
नव्यतार्किकमतम् दृशयत्किंचिज्ज्ञानग्राह्यत्वस्यैव साध्यतया सि-
द्धसाधनं दुर्वारमेव । प्रथमानुव्यवसायरूपतादृशयत्किंचि-
ज्ज्ञानग्राह्यत्वस्य विशिष्टप्रामाण्यानतिरेकिणि घटत्वप्रकारि-
त्वादौ नैयायिकैरभ्युपगमात् । अथ विशिष्टप्रामाण्यत्वरूपप-
क्षतावच्छेदकनिरूपितस्वरूपसम्बन्धात्मकावच्छिन्नत्वावगाहिन्या-
स्तादृशज्ञानप्रकारतावगाहिन्याः सिद्धेः मीमांसकोद्देश्यतया न
सिद्धसाधनमिति चेत्—

न। तादृशज्ञानप्रकारत्वाभावे तादृशपक्षतावच्छेदकनिरूपितस्व-
रूपसम्बन्धरूपावच्छिन्नत्वस्य साधकाविरहेणोपगमासम्भवेन तत्र त-
त्सिद्धेर्नैयायिकानुद्देश्यतया तदुद्देश्यसिद्धावविरोधितया तादृश-
सिद्धेर्मीमांसकोद्देश्यत्वासम्भवात् । न च परेषां तादृशपक्षताव-
च्छेदकावच्छेदेन तादृशज्ञानप्रकारत्वस्य सिद्धिः । अस्माकं तु
तादृशपक्षतावच्छेदकावच्छिन्नत्वाविशिष्टस्वरूपसम्बन्धावच्छिन्नतद-
भावस्य सिद्धिरुद्देश्येति न काऽप्यनुपपत्तिरिति वाच्यम् । शु-
द्धस्वरूपसम्बन्धघटितसाध्यसामानाधिकरण्यघटितव्याप्तिविशिष्ट-
स्य हेतोः पक्षतावच्छेदकावच्छेदेन ज्ञानतद्विशिष्टप्रामाण्यत्वरूपप-
क्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे तादृशहेतुमता ज्ञा-
नस्य विशिष्टस्वरूपसम्बन्धावच्छिन्नतादृशसाध्याभावसिद्धिं प्र-
ति विरोधित्वासम्भवेन जल्प(१)विचारे सत्प्रतिपक्षनियमानुपप-

(१) प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोप-
न्नः पक्षप्रतिपक्षपरिग्रहश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः—
न्या० सू० भा० १. २. २.

त्तेः। तादृशप्रामाण्यत्वरूपपक्षतावच्छेदकावच्छिन्नत्वविशिष्टस्वरूप-सम्बन्धघटितव्याप्तिविशिष्टवत्ताज्ञानात्तादृशानुमितिरुद्देश्यत्वं च न सम्भवति। पक्षतावच्छेदकीभूततादृशप्रामाण्यत्वावच्छेदेन साध्याप्रसिद्धिदशायां तादृशप्रामाण्यत्वावच्छिन्नत्वविशिष्टस्वरूप-सम्बन्धघटितसाध्यसहचारग्रहाभावेन व्याप्तिग्रहासम्भवात्।

यत्तु विशिष्टप्रामाण्यत्वानवच्छिन्नासती याऽवच्छिन्नाप्रकारता तदन्या या तज्ज्ञानविषयकज्ञानाजन्यज्ञानप्रकारता सैव विधिकोटिर्मीमांसकानां तदभाव एव नैयायिकानां साध्य इति न कोऽपि दोषः। स्वरूपतो भासमानस्य ज्ञानत्वादेरनवच्छिन्नायां प्रकारतायामवच्छिन्नत्वरूपविशेष्याभावेन तादृशानवच्छिन्नत्वविशिष्टावच्छिन्नत्ववत्प्रकारतान्यप्रकारतायास्तत्र प्रसिद्धायाः पक्षे साधनस्याविकलत्वाद्घटत्वप्रकारित्वादेर्विशिष्टप्रामाण्यानतिरेकेऽपि तदीयप्रकारतायां घटत्वप्रकारितात्वाद्यवच्छिन्नत्वस्यावश्यकत्वेन तादृशप्रामाण्यत्वानवच्छिन्नत्वविशिष्टावच्छिन्नत्ववत्प्रकारतान्यप्रकारतायास्तत्र नैयायिकासिद्धत्वान्न साध्ये सहचाराप्रसिद्धिसिद्धसाधने इति–

तत्तुच्छम्। विधिप्रसिद्धिस्तु घटत्वप्रकारित्वादौ घटादाविति दीधितिग्रन्थासङ्गतेः। तदीयप्रकारताया घटत्वप्रकारितात्वादिघटत्वाद्यवच्छिन्नत्वावश्यकत्वेन तादृशप्रामाण्यत्वानवच्छिन्नत्वविशिष्टावच्छिन्नत्ववत्वेनैव नैयायिकासिद्धत्वादिति।

अत्र वदन्ति–तज्ज्ञानविषयकज्ञानाजन्ययत्किंचिज्ज्ञानप्रकारत्वमेव विधिकोटिः। तथा च तज्ज्ञानविषयकज्ञानाजन्यज्ञानत्वव्यापकभेदप्रतियोगितानवच्छेदकत्वमेव विधिकोटिः पर्यवस्यति। तज्ज्ञातविषयकज्ञानाजन्ययत्किंचिज्ज्ञानविषयत्ववत एव तादृशज्ञानत्वव्यापकभेदप्रतियोगितानवच्छेदकत्वसम्भवात्। अत्राव-

च्छेदकत्वं विषयितासम्बन्धावच्छिन्नं ग्राह्यम् । तादृशविधिकोट्यभाव एव च नैयायिकानां साध्यः । एवं च न पूर्वोक्तदोषः। तयोर्विशिष्टप्रामाण्यत्वरूपपक्षतावच्छेदकावच्छेदेन साधनस्य मीमांसकनैयायिकयोरुद्देश्यत्वादिति संक्षेपः ।

अथ वा प्रामाण्यं स्वाश्रयग्राहकेण गृह्यत एव न वेति विप्रतिपत्तिः । अत्रैवकारेण स्वाश्रयग्राहकत्वावच्छेदेन प्रामाण्यग्राहकान्यत्वव्यवच्छेदलाभान्न प्रामाण्यानुमितिमादाय सिद्धसाधनम् । न च क्रियासङ्गतैवकारात्कथं तल्लाभ इति वाच्यम् । नवीननये सर्वत्रैवकारस्यान्ययोगव्यवच्छेदमात्रार्थकत्वात् । तथाप्यवच्छेदकावच्छेदेन कथं तल्लाभ इति तु नाशङ्कनीयम् । ज्ञानेन विषयो गृह्यत एवेतिवत् ज्ञानेन रजतं गृह्यत एवेति प्रयोगवारणाय ग्रहधातूत्तरप्रत्ययसमभिव्याहृतैवकारस्यावच्छेदकावच्छेदेन स्वार्थबोधकत्वव्युत्पत्तेरावश्यकतया तल्लाभात् । अत एवात्रैवकारः प्रामाण्यत्वावच्छेदेन पक्षतालाभाय यावत्त्वस्य स्वातंत्र्येण ग्राहकत्वविशेषणाच्च न सिद्धसाधनमिति पक्षधरमिश्रमतमपास्तम् । उक्तरीत्यैव सर्वसामञ्जस्यात् । न चैवमपि ज्ञानपदादिशाब्दसामग्र्याः प्रामाण्याग्राहकत्वाद्बाध इति वाच्यम् । प्रकृतप्रामाण्यं स्वाविषयकत्वेन ज्ञानाविषयकत्वेन भट्टमतसिद्धभिन्नो यावत्स्वाश्रयग्रहस्तद्विषयो न वेति निष्कर्षेणादोषात् । शेषं प्रथमविप्रतिपत्तिवद्बोध्यम् ।

एवं मीमांसकत्रयसाधारणं विप्रतिपत्तित्रयमुक्तम् । यदि च न कदा त्रिभिर्विवाद इति नोक्तरीतिः साधीयसीत्युच्यते तदा प्रत्येकसाधारणी सा वाच्या । तथा हि प्रकृतप्रामाण्यत्वावच्छिन्नविषयतात्वं तादृशप्रामाण्यविरोधिग्रहतत्सामग्र्यन्यतराकालीनतादृशप्रामाण्याश्रयत्वव्यापकतावच्छेदकं न वेति गुरुणा विवादे विप्रतिप-

त्तिः।तादृशविषयतात्वं तादृशप्रामाण्याश्रयविषयकप्रत्यक्षत्वव्याप-कतावच्छेदकं न वेति मिश्रेण विवादे तादृशविषयतात्वं तादृशप्रा-माण्याविषयकज्ञानविषयकभट्टमतसिद्धभिन्नतादृशप्रामाण्याश्रय-विषयकग्रहत्वव्यापकतावच्छेदकं न वेति भट्टेन विवादे विप्रति-पत्तिर्बोध्या ।

ननु ज्ञानस्य स्वप्रकाशत्ववादिगुरुमते विशिष्टबुद्धौ विशे-षणज्ञानस्याहेतुतया व्यवसायेन ज्ञानवृत्तिज्ञानत्ववत्तद्वृत्तिप्रा-माण्यस्य ग्रहसंभवेन तस्य स्वतो ग्राह्यत्वं संभवति । एवं भट्ट-मते जन्मान्तरीयसंस्कारेण स्मृतस्य प्रामाण्यविशिष्टज्ञानस्य ज्ञा-ततायां व्याप्तिग्रहेण तज्जन्यज्ञाततालिङ्गकानुमित्या प्रामाण्यग्र-

गुरुमिश्रमते स्वतो ग्राह्यत्वाक्षेपः ।

हसंभवेन तत्संभवति । मिश्रमते तु प्रामाण्योप-स्थितिं विना प्रथमानुव्यवसायेन प्रामाण्यग्रहा-संभवात्कथं प्रामाण्यस्य स्वतो ग्राह्यत्वसंभव इति चेत्—

आक्षेपनिरासः

न । प्रवृत्त्यौपयिकं प्रामाण्यं लाघवात्तद्वति तत्प्रकारकत्व-मेव । एवं च व्यवसायरूपप्रत्यासत्त्या घटे घटत्व-स्य तयोश्च विशेष्यत्वप्रकारित्वयोरनुपस्थितयोरपि प्रकारत्व-स्य सर्वसिद्धतया तदंशे प्रथमानुव्यवसायेन ग्रहणे बाध-काभावेन मिश्रमतेऽपि प्रामाण्यस्य स्वतो ग्राह्यत्वसम्भवादिति ।

अत्र नैयायिकाः—स्वप्रकाशज्ञाततयोर्बहुधाऽग्रे दूष्यत्वेन

नैयायिकमते स्वतस्त्वे दूषणमाह—

गुरुभट्टोक्तरीत्या प्रामाण्यस्य स्वतो ग्राह्यत्वं न संभवत्येव । मिश्रोक्तरीत्या प्रामाण्यस्य स्वतो ग्राह्यत्वेऽनभ्यासदशापन्नज्ञानप्रामाण्ये सर्वानुभवसिद्ध-संशयानुपपत्तिः । संशयं प्रति धर्मिज्ञानस्य हेतुतया तज्ज्ञा-नज्ञानस्यावश्यकतया तेन प्रामाण्यग्रहे प्रतिबन्धकसत्त्वे तदनु-पपत्तेरित्यगत्या प्रामाण्यप्रत्यक्षं प्रति विशिष्टप्रामाण्योपस्थितेर्हे-

तुतावश्यकी। इत्थं च तदुपस्थितिं विना प्रथमानुव्यवसायेन प्रामाण्यग्रहासम्भवेन मिश्रोक्तरीत्यापि प्रामाण्यस्य स्वतो ग्राह्यत्वं दुरुपपादम्।

यत्तु अनभ्यासदशापन्नज्ञानं न प्रामाण्यं गृह्णाति संशयजनकदोषेण प्रतिबन्धात्। न चैवं प्रमाण्यस्य स्वतो ग्राह्यत्वव्याघात इति वाच्यम्। तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वस्यैव स्वतस्त्वरूपतया तद्व्याघाताभावादिति–

तदसत्। संशयजनकीभूताननुगतदोषाणां प्रामाण्याग्रहप्रतिबन्धकत्वकल्पनापेक्षया तत्रानुगतप्रामाण्योपस्थितिहेतुताया एवोचितत्वात्। न च प्रामाण्यग्रहेऽनुगताया अप्रामाण्योपस्थितेरेव दोषविधया प्रतिबन्धकत्वमिति वाच्यम्। अप्रामाण्योपस्थित्यभावहेतुत्वापेक्षया प्रामाण्योपस्थितिहेतुतायां लाघवात्।

वस्तुतस्तु प्रामाण्यप्रत्यक्षे विशिष्टप्रामाण्योपस्थितेर्हेतुत्वेऽनुमित्यादिकं प्रति प्रामाण्यप्रत्यक्षेच्छाविशिष्टतद्घटितप्रामाण्यप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वे लाघवम्। तदहेतुत्वे विशृंखलतद्घटकविशेष्यितादिज्ञानात्तत्प्रत्यक्षोपगमे तत्तत्पदार्थविषयकानेकोपस्थितीनां तादृशसामग्रीप्रतिबन्धकतायां निवेशापत्त्या तासां परस्परं विशेष्यविशेषणभावे विनिगमनाविरहेणानेकप्रतिबन्धकत्वे गौरवम्। तद्धेतुत्वे तत्र विशिष्टविषयकैकोपस्थितेर्निवेशेनैवोपपत्तेरिति तद्धेतुत्वमावश्यकम्। एतेन प्रामाण्यस्य स्वतो ग्राह्यत्वेऽपि न तत्संशयानुपपत्तिः। धर्मीन्द्रियसन्निकर्षकोटिद्वयोपस्थित्यादित एव संशयोपपत्त्या धर्मिज्ञानस्य संशयहेतुत्वानुपगमेन प्रामाण्यसंशयात्मकस्यैवानभ्यासदशापन्नाज्ञानज्ञानस्योपगमात्। तदनन्तरं च प्रामाण्यसंशयोऽसिद्ध एव। न च तुरगादौ वेगेन गच्छतो नानाधर्मिसन्निकर्षेऽपि क्वचिदेव

पुरुषत्वादिसंशयो न सर्वत्रेति नियमाय धर्मिज्ञानस्य संशयहेतुत्वमावश्यकमिति वाच्यम् । सन्निकर्षादिसत्त्वेन तत्र सकलधर्मिण एव ज्ञानसंभवेन भवतामपि संशये धर्मिनियमानुपपत्त्याननुगतस्य नियामकान्तरस्योभयमतेऽप्यावश्यकत्वात् । अथ संशयस्य क्वचिदेव धर्मिणि किंचित्कोट्यंश एवोत्कटत्वं न तु सर्वत्र धर्मिणि सकलकोट्यंश एवेति नियमाय तत्तद्धर्मिणि तत्तत्कोट्यंशे उत्कटकोटिकसंशयं प्रति तत्तत्कोटिसहचरितभूयो धर्मविशिष्टतत्तद्धर्मिज्ञानत्वेन हेतुत्वमावश्यकम् । इत्थं च यद्विशेषयोरितिन्यायेन संशयसामान्ये आरोपसामान्ये वा धर्मिज्ञानस्य हेतुत्वमावश्यकमिति चेत्—

न । उत्कटत्वस्यांशिकतया जातित्वाभावेन मानाभावेन विषयिताविशेषत्वाभावेन तत्तत्कोटिसहचरितानेकधर्मवद्धर्मिविषयकत्वरूपतयाऽर्थसमाजग्रस्तत्वेन तद्घटितद्धर्मावच्छिन्ने धर्मिज्ञानविशेषस्य कारणत्वासंभवादिति मीमांसकानुयायिमतमप्यपास्तम् । उक्तयुक्त्या स्वातन्त्र्येण प्रामाण्योपस्थितेर्हेतुत्वावश्यकतया प्रामाण्यस्य स्वतो ग्राह्यत्वासंभवात् ।

नन्वेवं परतो ग्राह्यत्वमप्यसंभवि । प्रथमानुव्यवसायादिना परतो ग्राह्यत्वे संशयः प्रामाण्याग्रहे तदनुपस्थित्या प्रामाण्यप्रत्यक्षासंभवात् । प्रामाण्यरूपसाध्योपस्थितिं विना व्याप्त्यादिज्ञानासम्भवेनानुमितेरप्यसम्भवात् ।

यत्तु पूर्वजन्मजातप्रामाण्यगोचरसंस्काराधीनतत्स्मरणमूलकव्याप्त्यादिज्ञानात्तदनुमितिः । न च पूर्वजन्मनि कथं तदनुभव इति वाच्यं, तत्पूर्वजन्मजातसंस्काराधीनतत्स्मरणमूलकव्याप्त्यादिज्ञानजन्यानुमितेः संभवात् । जन्मप्रवाहस्यानादितया वीजांकुरस्थलवदनवस्थाया अदोषत्वात् । स्तनपानेष्टसाधनतास्मरण-

हेतुसंस्कारस्येव प्रामाण्यगोचरसंस्कारस्याप्यदृष्टविशेषः कालविशेषो वा फलबलाद्बाधकः कल्प्यतेऽगतिकत्वादिति—

तदसत् । एवमप्यपूर्वचैत्रत्वादिप्रकारकज्ञानप्रामाण्यस्य जन्मान्तरे ज्ञानासंभवेन तत्र जन्मान्तरीयसंस्कारेणानिर्वाहादिति चेत्—

अत्र मणिकृतः । विनापि साध्यप्रसिद्धिं तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यव्यापकीभूताभावप्रतियोगितया हेतुमत्त्वावगाहिव्यतिरेकिपरामर्शात्तद्रूपाप्रामाण्याभावात्मकप्रामाण्यानुमितिः संभवति । तद्रूपाप्रामाण्यरूपप्रतियोगिज्ञानं च घटत्वापूर्वचैत्रत्वाद्यभावोपनायकबाधादिज्ञानकालीनभ्रमानुव्यवसाय एव सुलभमिति न प्रतियोगिज्ञानाधीनव्यतिरेकव्याप्तिज्ञानानुपपत्तिः । अथोक्तक्रमेणाभावरूपप्रामाण्यानुमानेऽपि भावरूपप्रामाण्यानुमितिर्न संभवत्येव । न चाभावरूपप्रामाण्यानुमित्यैवाप्रामाण्यशंकाविरहसंपादनेन प्रवृत्त्युपपत्तौ भावरूपप्रामाण्यानुमितेर्वैयर्थ्यमिति वाच्यम् । मीमांसकैर्भावरूपप्रामाण्यस्यैव स्वतो ग्राह्यत्वोपगमेन तस्य परतो ग्राह्यत्वव्युत्पादनं विना मीमांसकनिरासासंभवादिति चेत्—

अभावरूपप्रामाण्यानुमानानन्तरं घटत्वप्रकारकमिदं ज्ञानं घटविशेष्यकं, घटत्वाभाववदविशेष्यकत्वे सति सविशेष्यकत्वात्, यन्नैवं तन्नैवं, यथाघटतद्भ्रमादीतिव्यतिरेक्यनुमानेन भावरूपस्याप्रामाण्यस्याप्यनुमानसम्भवात् । अत्र हेतौ सत्यन्तविशेषणासिद्धिपरिहारायैवाभावरूपप्रामाण्यानुमानं विशेष्यतांशे घटादिनिरूपितत्वानुमानाधीनानुमित्यात्मिका घटादिविशेष्यकत्वघटकविशृंखलपदार्थोपस्थितिमूलकोपनीतभानात्मिका वा साध्यप्रसिद्धिर्बोध्या । एवं प्रथमतः प्रामाण्यानुमितौ तदनन्तरमिदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वादित्यादिरीत्या प्रामाण्यानुमि-

त्यनन्तरमनुमित्यात्मकविशिष्टप्रामाण्योपस्थितिमूलकोपनीतिभानात्मकप्रामाण्यप्रत्यक्षं च निराबाधमिति न परतो ग्राह्यत्वासंभव इति वदन्ति ।

नव्यास्तु तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वमात्रं तत्प्रामाण्यं रंगरजतयोरिमे रजतरंगे इत्यादिविपरीतभ्रमसाधारण्यात् । किन्तु तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम् । इत्थं च प्रथमानुव्यवसायेन खंडशो दलद्वयग्रहेऽप्यवच्छेद्यावच्छेदकभावाग्रहान्न स्वतो ग्राह्यत्वम् । तस्य द्वितीयानुव्यवसायादिना तद्ग्रहसंभवात्परतो ग्राह्यत्वम् । एवं मणिकारोक्तानुमाने एतादृशप्रामाण्यस्याविधेयत्वेऽपि घटत्वप्रकारकत्वरूपपक्षतावच्छेदकविशिष्टे घटत्वविशेष्यत्वरूपसाध्ये भासमानेऽसति प्रतिबन्धके पक्षतावच्छेदकसाध्ययोरवच्छेद्यावच्छेदकभावस्यानुमितिगोचरत्वनियमेन घटत्वप्रकारकत्वावच्छिन्नघटविशेष्यकत्वभानमित्यादिरीत्यापि तत्सिद्धिर्निष्प्रत्यूहेति प्राहुः ।

अप्रामाण्यन्तु परतो ग्राह्यत्वेनैव सर्वसंमतम् । तस्य तदभावघटिततया तद्ग्रहसापेक्षग्रहकत्वेन स्वतो ग्राह्यत्वाप्रसक्तेरिति दिक् ।

एवमुत्पद्यतेऽपि प्रमा परत एव । तथा हि आगन्तुके हेत्वधीनोत्पत्तिरेव परत उत्पत्तिः । आगन्तुकत्वं च प्रमात्वशून्यज्ञाननिरूपितजनकतानवच्छेदकावच्छिन्नत्वम् । तेन भ्रमसाधारणजन्यतानिरूपितजनकतावच्छेदकात्ममनोयोगत्वविशेषणज्ञानत्वेंद्रियसन्निकर्षत्वाद्यवच्छिन्ननिरूपितजन्यतामादाय न सिद्धसाधनम् । न चैवमपि पर्वतोद्देश्यकवह्निविधेयकानुमितित्वाद्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकपर्वतविशेष्यकवह्निव्याप्यप्रकारकनिश्चयत्वाद्यवच्छिन्ननिरूपितजन्यतामादाय पर्वतो वह्निमानित्यादिप्रमानुमितावंशतः सिद्धसाधनं दुर्वारमिति वा-

परतस्त्वसाधनम्

च्यम् । अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया अंशतः सिद्धसाधनस्यादोषत्वात् ।

नव्यास्तु पर्वतोऽयं वह्निव्याप्यवानित्यादिपरामर्शोऽपि समानविशेष्यतादिप्रत्यासत्त्या वह्न्यादिव्याप्यवत्ता निश्चयत्वरूपेण भ्रमानुमितिसाधारणवह्न्याद्यनुमितित्वावच्छिन्नं प्रत्येव हेतुरिति न तज्जन्यतया प्रमानुमितावंशतः सिद्धसाधनमित्याहुः ।

एवं च प्रमाणेन प्रमाजनने गुणस्य सहकारितया प्रमायां तादृशहेत्वधीनोत्पत्तिकत्वं प्रमाणाभावेन भ्रमजनने दोषस्य सहकारितया भ्रमे तादृशहेत्वधीनोत्पत्तिकत्ववत् । गुणश्च प्रमासामान्ये विशेष्यसंबद्धविशेषणज्ञानमेव रंगादौ समवायादिना रजतत्वादिप्रमावारणाय प्रमासामान्ये तादृशज्ञानस्य हेतुत्वात् ।

ननु सामान्यतः प्रमात्वावच्छिन्नं प्रति विशेष्यसम्बद्धविशेषणज्ञानत्वेन हेतुता न संभवति । प्रमात्वस्य प्रकारसम्बन्धभेदेन भिन्नत्वात् । न च प्रकारसम्बन्धभेदेन भिन्नहेतुत्वोपगमान्न दोष इति वाच्यम् । रजतत्वादेरपि यत्किंचिज्जातीयविशेष्ये रजतादौ सम्बन्धतया तज्ज्ञानकाले तादृशकारणसमवधानसत्त्वेन तादृशहेतुतया रंगादौ समवायादिना रजतत्वादिप्रमावारणसंभवात् । न च तद्धर्मिनिष्ठविशेष्यताकतत्सम्बन्धेन तत्प्रकारकप्रमात्वावच्छिन्नं प्रति तत्सम्बन्धेन तद्धर्मिसम्बद्धतद्धर्मविषयकज्ञानत्वेन हेतुतेत्येवंरीत्या हेतुत्वकल्पनान्न दोष इति वाच्यम् । तथा सति समवायादिना रंगादिविशेष्यकरजतत्वादिप्रकारकप्रमात्वादेः रंगादिसम्बद्धरजतत्वादेश्चाप्रसिद्ध्या तज्ज्ञानस्यापि तथात्वेन हेतुत्वस्यासम्भवेन तेनोक्तापत्तिवारणसंभवादिति चेत्—

अत्र वदन्ति । विशेष्यताप्रत्यासत्त्या तत्सम्बन्धेन तत्प्रकारकप्रमात्वावच्छिन्नं प्रति तत्सम्बन्धेन स्वविषयतद्धर्मवत्त्वप्रत्या-

सत्त्या ज्ञानत्वेनैव हेतुता कल्प्यते। रजतादौ स्वविषयरजतत्वसमवायित्वादिप्रत्यासत्त्या रजतत्वादिज्ञानस्य सत्वात्तत्र विशेष्यतासम्बन्धेन समवायादिसंसर्गकरजतत्वादिप्रकारकप्रमोत्पद्यते। रङ्गादौ च तादृशप्रत्यासत्त्या न किञ्चिदपि ज्ञानमस्तीति न तत्र समवायादिना रजतत्वादिप्रमोत्पत्तिः। अथ विशेष्यताप्रत्यासत्त्या रजतत्वादिप्रकारकसमूहालम्बनप्रमाया रजतादिभिन्नेऽप्युत्पत्त्या तत्रोक्तप्रत्यासत्त्या ज्ञानाभावाद्व्यभिचार इति चेत्—

मैवम्। रजतत्वादिप्रकारतानिरूपितरजतत्वादिमद्विशेष्यताकत्वरूपप्रमात्वविशिष्टा सती प्रमा न रजतादिभिन्ने वर्त्तते। एकधर्मिविशेष्यकत्वविशिष्टनिरूपितविशेष्यतासम्बन्धावच्छिन्नाधिकरणताया अन्यधर्मिण्यनभ्युपगमात्। तथा च नात्र कार्यतावच्छेदकविशिष्टकार्याधिकरणे कारणाभावसत्त्वरूपव्यभिचारः। न च तत्सम्बन्धेन तत्प्रकारकप्रमां प्रति तत्सम्बन्धेन तद्धर्मस्य तद्धर्मप्रतियोगिकत्वविशिष्टतत्सम्बन्धस्य तत्सम्बन्धेन तद्धर्मवतस्तादात्म्यसम्बन्धेन वा हेतुत्वमस्तु किं ज्ञानहेतुतयेति वाच्यम्। विशेषणस्य तत्सम्बन्धस्य विशेष्यस्य च चिरातीतत्वानागतत्वदशायामप्युपनीतभानाद्यात्मकप्रमोत्पत्त्योक्तरीत्या ज्ञानहेतुत्वस्यावश्यकत्वात्। न चैवं यत्र विशेषणादीनां नित्यता तत्र तेषामेव हेतुत्वमस्त्विति वाच्यम्। इष्टत्वात्। अनित्यविशेषणायावगाहिप्रमायामेव विशेष्यसम्बद्धविशेषणज्ञानस्य गुणविधया हेतुत्वोपगमात्। न चोक्तप्रत्यासत्त्या ज्ञानत्वेनेच्छात्वेन कृतित्वेन वा हेतुत्वमित्यत्र विनिगमनाविरह इति वाच्यम्। उपजीव्यत्वेन प्रथमोपस्थितत्वस्यैव विनिगमकत्वात्। अगत्येष्टापत्तिसम्भवाच्च। प्रत्यक्षप्रमात्वावच्छिन्नं प्रति विशेषणवद्विशेष्येन्द्रियसन्निकर्षात्मकगुणो हेतुः। तस्य च रजतत्ववच्चक्षुःसंयोगत्वादिना हेतु-

ता । रजतत्वप्रकारकचाक्षुषप्रमात्वादिना कार्यता । प्रत्यासत्तिश्चात्मनिष्ठा कारणस्य स्वाश्रयीभूतचक्षुःसंयुक्तमनःप्रतियोगिकविजातीयसंयोगरूपाकार्यस्य च समवायः । अनुमितिप्रमायां सल्लिङ्गपरामर्शो गुणः । सल्लिङ्गपरामर्शश्च न प्रमात्मकपरामर्शः । अव्याप्यापक्षधर्मयोस्तत्त्वावगाहिना परामर्शेणापि वस्तुगत्या साध्यवति पक्षे प्रमानुमितिजननादपि तु साध्यवद्विशेष्यकपरामर्श एव । तथा च वह्न्यादिप्रकारकप्रमानुमितित्वावच्छिन्नं प्रति वह्न्यादिमद्विशेष्यकपरामर्शत्वेन हेतुता । उभयोः प्रत्यासत्तिः समवायः । एवं शाब्दप्रमायां योग्यताप्रमा गुणः । तस्य च तद्धर्मप्रकारकशाब्दप्रमात्वावच्छिन्नं प्रति तद्धर्मवद्विशेष्यकतद्धर्मप्रकारकज्ञानत्वेन हेतुता प्रत्यासत्तिरुभयोः समवायः । एवमुपमितिप्रमायां बोध्यवद्विशेष्यकसादृश्यज्ञानं गुणः । तद्धेतुता च तद्धर्मप्रकारकोपमितिप्रमात्वावच्छिन्नं प्रति तद्धर्मवद्विशेष्यकसादृश्यज्ञानत्वेन प्रत्यासत्तिरुभयोः समवायः । सर्वत्र प्रमात्वघटकसम्बन्धनिवेश ऊहनीयः ।

मीमांसकमते स्वतस्त्वसमर्थनयुक्तिः

मीमांसकास्तु प्रमाया गुणजन्यत्वाभावान्न परत उत्पत्तिः किन्तु भ्रमहेतुदोषाभावसहकृतज्ञानसामान्यहेतोरेवेति स्वत एवोत्पत्तिः । न चैवमपि दोषाभावरूपागन्तुकहेत्वधीनोत्पत्तिकतया तदुत्पत्तावागन्तुकहेत्वधीनत्वरूपस्वतस्त्वव्याघात एवेति वाच्यम् । हेतौ भावत्वनिवेशेन दोषाभावाधीनत्वेऽपि स्वतस्त्वानपायादित्याहुः—

नैयायिकमते तत्खण्डनम्

तदसत् । भ्रमं प्रति दोषो हेतुस्तदभावः प्रमाहेतुरुत प्रमां प्रति गुणो हेतुस्तदभावो भ्रमं प्रति हेतुरित्यत्र विनिगमकाभावेन प्रमाभ्रमयोर्गुणदोषहेतुकत्वसिद्धावुभयोरेव परत उत्पत्तिकत्वसिद्धेः ।

नव्यास्तु प्रमात्वभ्रमत्वयोरर्थसमाजग्रस्ततया कार्यतानवच्छेदकत्वेन तदवच्छिन्नेन गुणदोषयोर्हेतुत्वम् । तथा हि यथा पृथिवीत्ववति रजतत्वप्रकारकत्वादिकं न कस्य चित्कार्यतावच्छेदकं धर्मिनिष्ठपृथिवीत्वादिमत्वेन सहितायास्तद्धर्मिणि रजतत्वादिप्रकारकत्वप्रयोजकसामग्र्या अर्थवशात् पृथिवीत्वादिमति रजतत्वादिप्रकारकत्वावच्छिन्नोत्पत्तिनिर्वाहात्तथा तत्समानयोगक्षेमरजतत्वादिमति रजतत्वादिप्रकारकत्वरूपप्रमात्वावच्छिन्नोत्पत्तेरपि धर्मिणि रजतत्वादिमत्तया सहितायास्तद्धर्मिणि तत्प्रकारकत्वप्रयोजकसामग्र्या एवं निर्वाहात्तदपि न कार्यतावच्छेदकम् । एवं यथा रङ्गत्ववति रजतत्वादिप्रकारकत्वादिकं न कस्य चित्कार्यतावच्छेदकं धर्मिनिष्ठरङ्गत्वादिमत्वेन सहितायास्तद्धर्मिणि रजतत्वादिप्रयोजकसामग्र्या अर्थवशाद्रङ्गत्वादिमति रजतत्वादिप्रकारकत्वावच्छिन्नोत्पत्तिनिर्वाहात्तथा तत्समानयोगक्षेमरजतत्वाभाववति रजतत्वप्रकारकत्वादिरूपभ्रमत्वावच्छिन्नोत्पत्तेरपि धर्मिणि रङ्गत्वादिमत्तया सहितायास्तद्धर्मिणि तत्प्रकारकत्वप्रयोजकसामग्र्या एव निर्वाहात्तदपि न कार्यतावच्छेदकमिति प्राहुः ।

ननु किमिदं प्रमात्वम् ? न तावज्जातिः, प्रत्यक्षत्वादिना सांकर्यात् । न वा तद्वति तत्प्रकारकानुभवत्वं प्रमात्वं, रंगरजतयोरिमे रजतरंगे इति विपरीतभ्रमसाधारण्यात् । कालिकादिसम्बन्धेन रजतत्वादिमति कालादौ समवायादिना तदवगाहिभ्रमसाधारण्याच्चेति चेत्—

प्रमात्वविचारः

न । तत्सम्बन्धेन तद्वद्विशेष्यकत्वावच्छिन्नतत्सम्बन्धेन तत्प्रकारकत्वस्य तत्वात् । तथा च तत्सम्बन्धेन तद्वन्निष्ठविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतत्प्रकारताशाल्यनुभवत्व-

म् । तेन सम्बन्धेन तत्प्रमात्वमिति पर्यवसितमिति नोक्तदोषः । अथैवमपि गुणो गुणान्यत्वविशिष्टसत्तावानिति भ्रमेऽतिव्याप्तिर्विशिष्टस्यानतिरिक्ततया गुणस्यापि विशिष्टसत्तावत्वादिति चेत्—

न । तद्वन्निष्ठत्वस्य तद्धर्मावच्छिन्नाधिकरणान्निष्ठत्वार्थकतया तत्प्रकारतेत्यस्य तद्धर्मावच्छिन्नप्रकारतेत्यर्थकतयाऽदोषात् । विशिष्टाधिकरणताया अतिरिक्तत्वात् ।

यत्तु प्रकारतावच्छेदकानवगाहिरजतमित्यादिप्रमाण्याप्त्या तादात्म्यादिरूपवृत्त्यनियामकसम्बन्धावगाहिप्रमाण्याप्तिसंपादकप्रमात्वघटकसम्बन्धावच्छिन्नाधिकरणत्वनिवेशासंभवेन गुणान्यत्वाद्युपलक्षितसत्वादिप्रकारकगुणादिविशेष्यकज्ञानस्य प्रमात्वानुपपत्त्या चोक्तमसंगतमिति नवीनैरुक्तम्—

तच्चिन्त्यम् । प्रकारताभेदेन प्रमात्वस्य भिन्नतया सावच्छिन्नप्रकारतास्थले उक्तरीत्यनुसरणेन निरवच्छिन्नप्रकारतास्थले यथाश्रुततद्वत्त्वप्रकारत्वयोर्निवेशेनाद्यदोषाभावात् विशिष्टाधिकरणतावदतिरिक्तस्य विशिष्टसम्बन्धित्वस्य निवेशाच्च न द्वितीयोऽपि दोषः । विशिष्टोपलक्षितप्रकारतयोर्भिन्नतया विशिष्टप्रकारतास्थले उक्तरीत्यनुसरणेनोपलक्षितप्रकारतास्थले यथाश्रुततद्वत्वतत्प्रकारकत्वयोर्निवेशेन तृतीयदोषस्याप्यभावात् ।

नव्यास्तु गुणे गुणान्यत्वविशिष्टसत्तावैशिष्ट्यावगाही प्रत्ययः । सत्ताद्यंशे प्रमैव । किन्तु स्वावच्छिन्ननिरूपितसमवायादिसम्बन्धेन विशेषणतावच्छेदकीभूतगुणान्यत्वादेस्तत्र गुणादिरूपधर्मिणि प्रकारत्वोपगमेन तदंश एव भ्रम इत्याहुः—

तच्चिन्त्यम् । तादृशप्रत्यये परंपरासम्बन्धेन गुणान्यत्वादेर्भाने मानाभावात् ।

अथ समवायस्यैक्यमते वायू रूपवानित्यादिसमवायसंसर्गकप्रत्ययस्य प्रमात्वापत्तिः । तत्सम्बन्धातिरिक्तस्य तद्वत्त्वस्य दुर्वचनतया स्पर्शादिसमवायिनि वाय्वादावपि रूपादिमत्त्वस्य सत्त्वादिति चेत्—

न । तत्प्रतियोगिकत्वविशिष्टनिरूपितसम्बन्धित्वस्य तद्वत्त्वरूपतया तस्य चातिरिक्ततया वाय्वादौ रूपादिप्रतियोगिकत्वविशिष्टनिरूपितसमवायित्वाभावेनादोषात् ।

केचित्तु रूपादिप्रतियोगिकसमवायस्य वाय्वाद्यनुयोगिकत्वेऽपि न तस्य वाय्वाद्यनुयोगिकत्वावच्छेदेन रूपादिप्रतियोगिकत्वम् । किन्तु पृथिव्याद्यनुयोगिकत्वावच्छेदेनैवेति । एवं च यद्धर्म्यनुयोगिकत्वावच्छेदेन यत्सम्बन्धस्य यद्धर्मप्रतियोगिकत्वं तद्धर्मिणि तेन सम्बन्धेन तत्प्रकारकज्ञानत्वमेव तद्धर्मिणि तत्सम्बन्धेन तत्प्रमात्वमिति न वायू रूपवानित्यादिज्ञानस्य प्रमात्वापत्तिरित्याहुः । अधिकमग्रे वक्ष्यामः ।

ननु स्वसमवायिसंयोगादिपरम्परासम्बन्धेन गुणादौ सत्तादिमत्ताबुद्धेरपि प्रमात्वापत्तिः । परंपरासम्बन्धत्वस्य तद्घटकसमवायादिनिष्ठतया समवायादिसम्बन्धेन सत्तावत्त्वस्य गुणादौ सत्त्वादिति चेत्—

न । सम्बन्धतापर्याप्त्यधिकरणसम्बन्धेन तद्वत्त्वस्य निवेशेन तत्र व्यासज्यवृत्तिसम्बन्धताया विशेष्यविशेषणभावापन्नतावत्सम्बन्धेषु पर्याप्ततया एकदेशमादायादोषात् ।

नव्यास्तु तत्सम्बन्धेन यस्तद्वत्ताद्विशेष्यतानिरूपिता या तत्सम्बन्धीयसांसर्गिकविषयता तन्निरूपिततद्धर्मप्रकारताकत्वमेव

विवक्षितम् । उक्तस्थले च समवायीयसांसर्गिकविषयता न विशेष्यतानिरूपिता अपि तु संयोगीयसांसर्गिकविषयतानिरूपितैवेति न समवायेन प्रमात्वप्रसंग इति प्राहुः ।

ननूपदर्शितप्रमात्वस्यैव प्रमापदशक्यतावच्छेदकतया तस्याननुगततत्प्रकारसम्बन्धघटिततया प्रमापदस्य नानार्थतापत्तिः । समवायेन रजतत्वं प्रमिमीते इत्यादौ समवायेन रजतत्वमित्यस्यानन्वयप्रसङ्गश्चेति चेत्--

न । प्रमापदस्य नानार्थतायामगत्येष्टापत्तेः । तदादिपदस्थल इव बुद्धिविशेषविषयतावच्छेदकस्योपलक्षणतया शक्यतावच्छेदकघटकप्रकारसम्बन्धानामननुगमकतया प्रमापदस्य नानार्थत्वप्रसंगाभावाच्च । उक्तानन्वयप्रसंगश्च समवायेन रजतत्वमित्यस्य तात्पर्यग्राहकतया परिहरणीयः । एवं भ्रमत्वमपि तदभाववति तत्प्रकारकानुभवत्वम् । तदपि तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाववन्निष्ठविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतत्प्रकारताशाल्यनुभवत्वम् । तेन रंगरजत इत्यादिसमूहालम्बनस्य न भ्रमत्वापत्तिर्न वा सम्बन्धभेदमादाय प्रमामात्रस्य भ्रमत्वापत्तिः । सावच्छिन्नप्रकारतास्थले तद्धर्मावच्छिन्नाभाववन्निष्ठत्वतद्धर्मावच्छिन्नप्रकारत्वे निविष्टे तेन गुणो गुणान्यत्वाविशिष्टसत्तावानित्यादेर्न भ्रमत्वानुपपत्तिः । न च कपिसंयोगी वृक्ष इत्यादिप्रमायामतिव्याप्तिरिति वाच्यम् । प्रतियोगिवैयधिकरण्यस्याभावे निवेशात् । न चैवं मूले वृक्षः कपिसंयोगीतिभ्रमेऽव्याप्तिरिति वाच्यम् । तत्र कपिसंयोगवत्त्वांशे प्रमात्वेनावच्छेदकत्वांश एव भ्रमत्वांगीकारात् । भ्रमपदस्य नानार्थत्वादिकमपि उपदर्शितदिशा परिहरणीयमिति संप्रदायः ।

केचित्तु स्वाश्रयविशेष्यताकत्वावच्छिन्नस्वप्रकारताकत्वसं-

म्बन्धेन किंचिद्धर्मविशिष्टानुभवत्वं प्रमात्वं, स्वाभाववद्विशेष्यताकत्वावच्छिन्नस्वप्रकारताकत्वसम्बन्धेन किञ्चिद्धर्मविशिष्टानुभवत्वं च भ्रमत्वमनुगतमेवेत्याहुः—

तदसत्। भ्रमस्यापि विभिन्नसम्बन्धमादाय निरुक्तप्रमात्वापत्त्या भ्रमत्वानुपपत्त्या च तयोः संम्बन्धविशेषघटितत्वस्यावश्यकतया प्रकाराननुगमपरिहारेऽपि सम्बन्धाननुगमापरीहारात्।

नवीनमते प्रमात्वमप्रमात्वञ्च

नवीनास्तु स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वस्वप्रतियोगिनिष्ठत्वस्वनिष्ठसांसर्गिकविषयतानिरूपितत्वैतत्त्रितयसम्बन्धेन संसर्गविशिष्टप्रकारताशाल्यनुभवत्वं प्रमात्वमनुगतम्। उक्तत्रितयसम्बन्धेन संसर्गविशिष्टान्यप्रकारताशाल्यनुभवत्वं च भ्रमत्वमनुगतम्। अत्र संयोगेन वह्निप्रकारकह्रदाविशेष्यकभ्रमेऽतिव्याप्तेरव्याप्तेश्च वारणाय प्रमाभ्रमलक्षणे प्रथमसम्बन्धनिवेशः। संयोगेन द्रव्यत्वप्रकारकभ्रमे तद्वारणाय द्वितीसम्बन्धनिवेशः। वह्न्यवयवाविशेष्यकसंयोगसंसर्गकवह्निप्रकारकभ्रमे समवायवैशिष्ट्यमादाय तद्वारणाय तृतीयसम्बन्धनिवेशः।

न चैवमपि समवायेन रूपप्रकारकवायुविशेष्यकभ्रमे प्रमाभ्रमलक्षणेऽतिव्याप्तिरव्याप्तिश्च दुर्वारा। समवायस्यैक्येन रूपप्रकारतायामुक्तत्रितयसम्बन्धेन समवायवैशिष्ट्यसत्वादिति वाच्यम्। नवीनमते समवायस्य नानात्वेनादोषात्। तादृशप्रकारताऽनुभवश्च खण्डशः प्रमापदार्थः। केवलं प्रमिमीत इत्यादिपदात्तादृशतादृशप्रकारताशाल्यनुभवाश्रय इत्यन्वयधीः। समवायेन रजतत्वं प्रमिमीत इत्यादौ तादृशप्रकारतायां समवायान्वितत्तृतीयोपस्थाप्यमवच्छिन्नत्वं रजतत्वान्वितद्वितीयोपस्थापितमाधेयत्वं च

स्वरूपसम्बन्धेनान्वेति । समवायेन रजतत्वं प्रमिमीत इत्यादिकर्मप्रत्ययस्थले च तादृशप्रकारतारूपधात्वर्थस्यानुभवरूपापरधात्वर्थविशेष्यतयाऽन्वयः । समवायावच्छिन्नत्वस्य तत्र विशेषणतयाऽन्वयः । तादृशप्रकारत्वस्य प्रथमान्तपदोपस्थाप्यरजतत्वरूपधर्मिणि स्वरूपसम्बन्धेनान्वयः । रजतत्वप्रमेत्यादिषष्ठीतत्पुरुषस्थले च रजतत्वादिवृत्तितादृशप्रकारताकत्वविशिष्टे पूर्वपदस्य लक्षणा अनुभव एव धात्वर्थ इत्यादिकमूह्यमित्याहुः ।

केचित्तु समवायस्यैक्येऽपि न क्षतिः । तथा हि—स्वाश्रयनिष्ठविशेष्यतानिरूपितत्वस्वनिरूपकप्रतियोगिताश्रयवृत्तित्वस्वनिरूपकसम्बन्धनिष्ठसांसर्गिकविषयतानिरूपितत्वैतात्रितयसम्बन्धेनानुयोगिताविशिष्टप्रकारताशाल्यनुभवत्वमनुगतं प्रमात्वम् । तादृशत्रितयसम्बन्धेनानुयोगिताविशिष्टान्यप्रकारताशाल्यनुभवत्वं चानुगतं भ्रमत्वम् । समवायस्यैक्येऽप्यनुयोगिताया अनैक्यान्न वायू रूपवानित्यादिभ्रमे प्रमाभ्रमलक्षणयोरतिव्याप्तिरव्याप्तिश्चेत्याहुः—

तदसत् । तथापि स्वसमवायिसंयोगरूपपरम्परासम्बन्धेन स्फटिकविशेष्यकलौहित्यप्रकारकप्रमायां प्रमाभ्रमलक्षणेऽव्याप्त्यतिव्याप्त्योर्दुर्वारत्वात् । तत्र लौहित्यादिनिष्ठप्रतियोगितायाः संयोगानुयोगितानिरूपकत्वाभावेन कस्या अप्यनुयोगिताया उक्तत्रितयसम्बन्धेन वैशिष्ट्यस्य प्रकारतायामसत्त्वात् । न च साक्षात्परम्परासाधारणनिरूपकत्वनिवेशान्नोक्तदोष इति वाच्यम् । तथा सति स्वसमवायिसंयोगादिपरम्परासम्बन्धेन सत्ताप्रकारकगुणादिविशेष्यकभ्रमे प्रमाभ्रमलक्षणयोरतिव्याप्तिरव्याप्तेश्च प्रसङ्गात् । साक्षात्परम्परासाधारणनिरूपकत्वस्य दुर्वचत्वाच्च ।

अत्र वदन्ति-नित्यवृत्तिविषयतावत्वमनुगतं प्रमात्वम् । नित्यावृत्तिविषयतावत्वं चानुगतं भ्रमत्वम् । ज्ञानभेदेन विषयताभेदाभावाच्च न कोऽपि दोषः । समवायेन रजतत्वं प्रमिमीत इत्यादौ समवायान्वितमवच्छिन्नत्वं तृतीयाऽर्थो रजतत्वान्वितवृत्तित्वं च द्वितीयार्थस्तादृशविषयतायामन्वेति । एवमन्यदप्यूह्यमिति ।

केचित्तु ज्ञानभेदेन विषयताया भेदेऽभेदे च नित्यावृत्तिविषयतावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयताशाल्यनुभवत्वमनुगतं प्रमात्वम् । नित्यवृत्तिविषयतावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयताशाल्यनुभवत्वं चानुगतं भ्रमत्वम् । शेषं पूर्ववदित्याहुः—

केषाञ्चिन्मते प्रमात्वभ्रमत्वविचारः

तदसत् । निर्धर्मितावच्छेदकप्रमाभ्रमयोरसंग्रहापत्तेरित्यलं विस्तरेण ।

तन्निरासः

अत्र निर्विकल्पकं प्रमाभ्रमोभयबहिर्भूतम् । तस्य प्रमात्वव्यवहारस्तु भ्रमभिन्नत्वनिबन्धन इति प्रमालक्षणे तदसंग्रहो न दोषाय ।

अथ प्रमालक्षणे यत्र भ्रमेऽतिप्रसंगवारणाय तद्वत्वमुपात्तं स भ्रमः किं रूपः ? अंगीकृता च तत्तद्वादिभिर्भ्रमस्य तत्तद्रूपता । तदुक्तं-

आत्मख्यातिरसत्ख्यातिरन्यथाख्यातिरेव च ।
तथाऽनिर्वचनाख्यातिरख्यातिः ख्यातिपंचकम् ।

इतीति चेत्—

न । इदं रजतमित्यादिभ्रमस्य रंगादौ रजतत्वादिप्रकारकतया व्यधिकरणप्रकारकत्वेनान्यथाख्यातिरूपत्वात् । अ-

न्यथा प्रकारान्तरेण व्यधिकरणधर्मेण ख्यातिरन्यथाख्यातिरिति तद्विवरणात् ।

सौत्रान्तिक- बौद्धमतम् अत्र सौत्रान्तिकाः(१)ज्ञानाकारस्य रजतत्वादेर्बाह्यत्वज्ञानस्यैव भ्रमतया आत्मख्यातिरेव भ्रमः । आत्मनः क्षणिकविज्ञानरूपात्मनस्तदाकाररजतत्वादेर्बाह्यत्वेन ख्यातिरात्मख्यातिरिति तद्विवरणात् । अत एव नेदं रजतमित्यादिना पुरोवर्तिनि बाह्ये ज्ञानाकाररजतत्वादिनिषेधेन फलतो रजतत्वादेर्ज्ञानाकारत्वमेव व्यवस्थाप्यते इत्याहुः—

सौत्रान्तिकमत- निरासः तदसत् । ज्ञानं न रजतमित्याद्यबाधितप्रतीत्या रजतत्वादेर्ज्ञानाकारत्वासंभवात् । रजतत्वादेर्ज्ञानाकारत्वे ज्ञानस्याचाक्षुषतयाऽचाक्षुषत्वप्रसंगाच्च ।

वैभाषिकास्तु(२) भ्रमेऽसदेव रजतं भासत इत्यसत्ख्यातिरेव

---

(१) सूत्रस्यान्तं पृच्छतां कथित भवन्तश्च सूत्रस्यान्तं पृष्टवन्तः सौत्रान्तिका भवन्त्विति भगवता ( बौद्धेन ) अभिहिततया सौत्रान्तिकसंज्ञा संजातेति सायणमाधवाचार्याः सर्वदर्शनसङ्ग्रहे बौद्धदर्शने पृ० ४३ ( पूनास्थसंस्करणे )।

सूत्रान्तो नाम बौद्धदर्शने मूलग्रन्थाः । तानेवावलम्ब्य प्रपञ्चितं दर्शनं सौत्रान्तिकदर्शनम् । तदनुयायिनः सौत्रान्तिकाः इति म० म० सतीशचन्द्रविद्याभूषणो भारतीयन्यायशास्त्रनामकग्रन्थे ( पृ० २४८ )

(२) केचन बौद्धाः बाह्येषु गन्धादिष्वान्तरेषु रूपादिस्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति प्राथमिकान्विनेयानचीकथद्भगवान् । द्वितीयांस्तु विज्ञानमात्रग्रहाविष्टान्विज्ञानमेवैकं संदिति । तृतीयानुभयं सत्यमित्यास्थितान्विज्ञेयमनुमेयमिति । सेयं विरुद्धा भाषेति वर्णयन्तो वैभाषिकाख्यया ख्याताः —इति सायणमाधवः सर्वदर्शनसंग्रहे पृ० ४३ ।

बौद्धदर्शने व्याख्यानभूताः ग्रन्थाः विभाषेत्युच्यते । तानेवावलम्ब्य प्रपञ्चितं दर्शनं वैभाषिकदर्शनम् । तदनुयायिनो वैभाषिकाः— इति विद्याभूषणः ( भा० न्या० पृ० २४७ )

वैभाषिक- भ्रमः। असतो रजतादेः ख्यातिरसत्ख्यातिरिति
बौद्धमतम् तद्विवरणादित्याहुः—

तदप्यसत्। असतीन्द्रियसंनिकर्षादिरूपज्ञानसामग्र्यसंभ-
वैभाषिकमतनिरासः वेन तद्भानानुपपत्तेः।

न चानादिवासनापरिपाकरूपसामग्र्यैवासतो भानमिति वाच्यम्। भ्रमस्य सद्रजतादिविषयकत्वेनैवोपपत्तौ तादृशसामग्र्यसिद्धेः। एतेन रंगादिसदुपरागेणासदेव रजतत्वादिवैशिष्ट्यं भासत इति सदुपरागेणासद्वैशिष्ट्यभानमेवासत्ख्यातिरिति टीकाकृन्मतमपि निरस्तम्।

अत्र गुरवः—असंसर्गाग्रहकालीनरंगरजतादिज्ञानद्वयादेव
गुरूणां मतम् रंगादौ रजताद्यर्थिप्रवृत्त्यादिकार्यनिर्वाहेण भ्रमस्य विशिष्टज्ञानरूपत्वाभावेनाख्यातिरेव भ्रमः। रंगादेः रजतत्वादिना ख्यात्यभावो ख्यातिरिति तद्विवरणात्।

न च लाघवेन विशिष्टज्ञानस्य प्रवृत्तिजनकतया भ्रमस्य विशिष्टज्ञानरूपत्वमावश्यकमिति वाच्यम्। रजतत्वादिविशेषणे सन्निकर्षाद्यभावेन भ्रमस्य विशिष्टज्ञानरूपत्वासंभवात्। न च ज्ञानलक्षणासन्निकर्षस्तत्रास्तीति वाच्यम्। तस्यैवानभ्युपगमात्। न चैवं सोऽयं देवदत्तः सुरभिचन्दनं घटो नास्तीत्यादिविशिष्टप्रत्यक्षे तत्तादेः कथं भानमिति वाच्यम्। प्रत्यभिज्ञादेरप्यसंसर्गाग्रहकालीनधर्मधर्मिज्ञानद्वयरूपतांगीकारेण विशिष्टज्ञानरूपत्वानंगीकारात्। एतेन युगपदुपस्थितपदार्थानां कविकाव्यादिमूलीभूतविशिष्टज्ञानानुरोधेन ज्ञानलक्षणायाः सन्निकर्षत्वमावश्यकमित्यपि निरस्तम्। तत्रापि तादृशज्ञानद्वयस्यैव कविकाव्यादिमूलत्वांगीकारात्।

यत्तु प्रत्यक्षस्थले सन्निकर्षादिघटितसामग्र्यभावेन भ्रमरू-

पविशिष्टज्ञानासंभवेऽप्यनुमितिस्थले तत्संभवो दुर्वारः । तथाहि सामान्येन रूपेण व्याप्तिग्रहे बाधानवतारे लाघवज्ञानसहकारात्पक्षे विशेषरूपेण साध्यं परिच्छिनत्त्यनुमानमिति तत्राप्यनुमतम् । तथा च बाधानवतारे सति च लाघवज्ञाने बाधितमपि साध्यं पक्षे परिच्छिन्दत्केन वारणीयमिति दीधितिकृद्भिरुक्तं विवृतं चैतत्तद्व्याख्यातृभिः । महानसीयवन्हित्वादिना व्यापकताज्ञानं विनाऽपि शुद्धवह्नित्वादिना व्यापकताज्ञानस्य महानसीयवह्नौ लाघवमित्यादिलाघवज्ञानसहकारेण महानसीयवह्निभिन्नवह्न्यभाववान् पर्वत इत्यादीतरबाधसहकारेण महानसीयत्वविशिष्टवह्नित्वादिरूपेण तादृशवह्न्यादिविधेयकानुमितिजनकत्वं तत्रापि गुरोरनुमतम् । तथा च तादृशानुमितेर्भ्रमरूपविशिष्टज्ञानत्वं सूपपदं तादृशानुमितौ तादृशलाघवज्ञानेतरबाधयोर्हेतुत्वकल्पनाच्च न तच्छून्यकाले तदापत्तिः । न चैवं तादृशलाघवज्ञानादिजन्यानुमितौ महानसीयवह्नित्वावच्छिन्ननिरूपितव्याप्त्यवगाहिपरामर्शस्य व्यभिचार इति वाच्यम् । अन्यलिङ्गकानुमितौ व्यभिचारवारणाय परामर्शजन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशनस्यावश्यकतया व्यभिचाराभावात् । एवं तादृशपरामर्शजन्यानुमितौ लाघवज्ञानादीनां व्यभिचारवारणाय लाघवज्ञानादिजन्यतावच्छेदककोटावपि लाघवज्ञानाद्यव्यवहितोत्तरत्वं निवेशनीयमिति ।

अत्रेदं चिन्त्यम् । तादृशलाघवज्ञानादिना शुद्धवह्नित्वादिनैव महानसीयवह्निभावोपगमेन महानसीयवह्नित्वेन महानसीयवह्निभावं व्यापकतावच्छेदकरूपेणैव व्यापकस्यानुमितौ भानमिति नियमाभ्युपगन्तृणां नैयायिकधुरन्धराणामुपाध्यायादीनामप्यनुमतमिति मननात्तु मतमेवेति तत्राप्यनुमतमिति बलात्कारेण

गले पातनमसङ्गतम् ।

वस्तुतस्तु लाघवज्ञानादिवशाद्वह्नित्वेन महानसीयवह्नि-भानमप्यनुमितौ तेषां न संमतं पक्षतावच्छेदकसामानाधिकर-ण्येनैव साध्यं सर्वत्रानुमितिविषय इति नियमाभ्युपगन्तॄणां तेषां सर्वत्र सल्लिङ्गपरामर्शजन्यानुमितौ पक्षतावच्छेदकसमा-नाधिकरणसाध्यस्यैव भानात् युज्यते चैतत् । अन्यथोक्तस्थले वह्नित्वेन महानसीयवह्निभानोपगमे लाघवज्ञानाद्यसत्वे तादृश-भानवारणाय तत्र लाघवज्ञानादीनामव्यवहितोत्तरत्वं जन्यता-वच्छेदककोटौ निवेश्य जनकत्वं कल्पनीयम् । एवं लाघवज्ञा-नादिविषयसाध्यातिरिक्तसाध्याभानवारणाय तत्र तेषां प्रतिब-न्धकत्वं च कल्पनीयमिति महद्गौरवं स्यात् । अत एवानुमिति-लक्षणव्याख्यानावसरे उपाध्यायमतप्रस्तावे 'यदि च सल्लिङ्गपरा-मर्शादपि भ्रान्तानुमिति'रिति त्वदुक्तं सङ्गच्छते । लाघवज्ञाना-दिवशाद्वह्नित्वेन महानसीयवह्निमानस्य तेषां सम्मतौ सल्लिङ्गपरा-मर्शाद्भ्रान्तानुमितेस्तैरप्यभ्युपगमेनोपाध्यायमते सल्लिङ्गपरामर्शाद् भ्रान्तानुमितिर्न जायत इत्याशयेन 'यदि चेत्याद्युक्तेर'सङ्गत्यापत्तेः । तद्धर्मावच्छिन्नाभाववति तद्धर्मावच्छिन्नप्रकारताशालिज्ञानत्वमेव न तु तद्धर्मावच्छिन्नस्य भ्रमत्वम् । न तु तदभाववति तत्प्रकारता-शालिज्ञानत्वमात्रम् । तथा सति गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति ज्ञानस्य भ्रमत्वानुपपत्तेः । सत्तावान् गुण इति ज्ञा-नस्यापि भ्रमत्वापत्तेश्च । एवं च पर्वतस्य वह्नित्वावच्छिन्नाभाव-त्वाभावात् कथं तादृशानुमितेर्भ्रमत्वमिति चेत्--

सत्यम् । इदं तु तद्धर्मावच्छिन्नस्य भ्रमत्वे न तु तद्व्यक्तेः । तथा सति शुक्तौ स्वरूपतो रजतत्वप्रकारकज्ञानस्य भ्रमत्वानुप-पत्तेः । तत्प्रकारतावच्छेदकाभावात् । किन्तु तद्व्यक्त्यभाववति तद्व्य-

क्तिप्रकारकज्ञानत्वमेव तद्व्यक्तेर्भ्रमत्वम् । तच्च तत्राप्यक्षतम् । अत एव सामान्यलक्षणायां 'न च प्राचीनास्तत्प्रतियोगिनस्तदवगाहने च भ्रमत्व'मिति त्वयैवोक्तम् । अन्यथा तदसङ्गतेः । तथा हि प्रागभावप्रत्ययो हि प्रतियोगिविशिष्टाभावमेवावगाहते । सामान्यलक्षणानुपगमे च तदसम्भवः । प्रागभावस्य भाविप्रतियोगिकत्वेन तत्र प्रत्यासत्त्यन्तराभावात् । तत्रातीतस्यैव प्रतियोगितया भानमस्त्विति शंकायामुक्तं 'न च प्राचीना इत्यादि' । तत्र यदि तद्धर्मावच्छिन्नाभाववति तद्धर्मावच्छिन्नप्रकारकत्वमेव भ्रमत्वं तदा तदवगाहने च भ्रमत्वमित्यसंगतम् । न हि प्रागभावव्यक्तिः प्रतियोगितया घटत्वावच्छिन्ना भाववती येन प्राचीनघटावगाहने भ्रमत्वं स्यात् । तथा च तद्व्यक्त्यभाववति तद्व्यक्तिप्रकारकत्वं तद्व्यक्तेर्भ्रमत्वमित्यवश्यमुपेयमिति यदि चेत्यादेरसंगत्यापत्तिरुक्तरीत्या दुर्वारा ।

यत्तु तत्र प्रमाणप्रस्तावात्प्रमैव लक्ष्येत्यत्र प्रमात्वं भ्रमभिन्नत्वं तत्र भ्रमसामान्यभेदो न निवेश्यते । किन्तु तद्धर्मावच्छिन्नप्रकारकभ्रमभेद एवेति 'यदि चे'त्यादिग्रन्थो नासंगत इति नवीनैरुक्तम्—

तदसत् । तथा सति शुक्तौ स्वरूपतो रजतत्वप्रकारकभ्रमानुमितेर्लक्ष्यतापत्त्या तत्रानुमितिलक्षणाव्याप्तिसत्त्वेन संदर्भविरोधापत्तेः । भ्रमपदस्य संकोचे मानाभावाच्च । न च 'यदि चेति' ग्रन्थसंगत्यनुरोधेनैव संकोचाभ्युपगम इति वाच्यम् । संकोचं विनैवोक्तरीत्या तत्संगतेः । अत एव प्रकारान्तरेण भ्रमत्वं संकोच्य तद्ग्रन्थसंगत्युपपादनमनादेयमिति लाघवज्ञानादिना वह्नित्वेन महानसीयवह्निभानमप्युपाध्यायादीनामनुमतमेव । एतेन लाघवज्ञानादिवशान्महानसीयवह्नित्वेन महानसीयवह्निभानाभावेऽपि वह्नित्वेन

महानसीयवह्निभान एवानुमितेर्भ्रमरूपविशिष्टज्ञानत्वं दुर्वारम् । तस्यामुक्तरीत्या तद्व्यक्तिभ्रमत्वसम्भवादित्यपि निरस्तम् ।

अथ तादृशलाघवज्ञानजन्यानुमित्यनन्तरं पर्वतो महानसीयवह्निमान्न वेत्यादिसंशयानुदयस्यानुभवसिद्धत्वेन तत्र महानसीयवह्नित्वादिना महानसीयवह्न्यादिभानमवश्यमुपगन्तव्यम् । अन्यथा समानप्रकारकज्ञानस्यैव संशयविरोधितया तदुत्तरं तादृशसंशयस्य दुर्वारत्वादिति चेत्—

न । तादृशानुभवस्य सन्दिग्धत्वेन संशयसामग्रीसत्त्वे संशये इष्टापत्तेः । अनुभवसन्देहे च लाघवस्य निर्णायकतया तद्विरहेणोक्तरीत्या लाघवज्ञानादेः कारणत्वप्रतिबन्धकत्वकल्पने गौरवेण च तादृशानुमितेर्महानसीयवह्नित्वादिना महानसीयवह्न्यादिविषयकत्वस्य निर्युक्तिकत्वाच्च ।

यत्तु लाघवज्ञानादिजन्यानुमितौ महानसीयवह्नित्वादिना महानसीयवह्न्यादिविषयकत्वोपगमे महानसीयवह्निव्याप्यलघुमहानसीयवह्निकालीनवह्निव्याप्यधूमवान् पर्वत इत्याकारकलाघवज्ञानादिविशिष्टलघुमहानसीयवह्निकालीनवह्निव्याप्यधूमत्वावच्छिन्नहेतुकपरामर्शस्य महानसीयवह्नित्वावच्छिन्नविधेयकानुमितित्वावच्छिन्नं प्रति स्वातन्त्र्येण हेतुत्वं न कल्प्यत इति लाघवमस्तीति—

तदसत् । आपत्तिं प्रति आपाद्यव्यतिरेकानिर्णयविधया तादृशपरामर्शस्य हेतुत्वे कल्पनीये तत्रैवापत्तित्वादिकमनिवेश्य स्वाव्यवहितोत्तरत्वस्वसमानाधिकरण्योभयसम्बन्धेन तादृशनिर्णयविशिष्टत्वावच्छिन्नं प्रति तादृशनिर्णयत्वेन हेतुतायाः क्लृप्तत्वान्ममापि तादृशानुमितिं प्रति तादृशपरामर्शस्य स्वातन्त्र्येण हेतुत्वाकल्पनात् । न च भिन्नविषयकप्रत्यक्षादौ तादृशपरामर्शघटितानुमितिसामग्र्याः स्वातन्त्र्येण प्रतिबन्धकत्वकल्पने गौरवमिति वा-

च्यम् । भवन्मतेऽपि तादृशलाघवज्ञानादिघटितसामग्र्याः प्रतिबन्धकत्वकल्पनेन साम्यात् । न च तथापि भवन्मते तादृशपरामर्शघटितसामग्रीप्रतिबन्धकतावच्छेदकं गौरवं दुर्वारमिति वाच्यम् । सामग्रीप्रतिबन्धकतावच्छेदककोटौ तादृशपरामर्शनिवेशे तादृशपरामर्शशून्यकालीनाननुगतप्रत्यक्षादीच्छायास्तत्तद्व्यक्तित्वेनोत्तेजकत्वाकल्पनेन मन्मते लाघवात् । अथ क्षितिः सकर्तृका कार्यत्वाद्धटवदितीश्वरसाध्यकानुमाने क्षितिकर्तुरेकत्वे लाघवमिति लाघवज्ञानवशादेकत्वस्यानुमितौ भानमावश्यकम् । अन्यथा तादृशानुमित्यनन्तरं क्षितिकर्ता एकोऽनेको वेति संशयानुदयस्य सन्दिग्धत्वेऽपि नानेश्वरसिद्धिप्रसङ्गस्य दुर्वारत्वादिति व्यापकतानवच्छेदकरूपस्यानुमितौ लाघवज्ञानवशाद्भानासिद्धिरिति चेत्—

न । प्रमाणाभावेनैव नानेश्वरसिद्ध्यसम्भवेन वस्तुगत्या एकेश्वरसिद्धिसम्भवेन तत्रैकस्यानुमितिविषयत्वे मानाभावात् ।

ननु बाधस्य हेत्वाभासान्तरत्वानुपपत्त्याऽनुमितौ व्यापकतानवच्छेदकरूपस्य लाघवज्ञानादिवशाद्भानमावश्यकम् । तथा सत्येव तादृशानुमितिप्रतिबन्धकतया बाधस्य हेत्वाभासत्वसिद्धेः । न च लाघवज्ञानाद्यसत्त्वेऽपि पर्वतो वह्न्यभाववानिति बाधनिश्चये पर्वतो वह्निमानित्यनुमित्यनुदयेन तत्प्रतिबन्धकतया तस्य हेत्वाभासत्वसिद्धिरिति वाच्यम् । तत्र पर्वते धूमादिहेतोर्ज्ञानदशायां व्यभिचारज्ञानस्य सत्त्वेन तेनैवानुमितिप्रतिबन्धात् । तदज्ञानदशायां च पक्षधर्मताज्ञानाभावादेवानुमित्यनुदयसम्भवात् । न च वह्न्यभाववद्वृत्तिर्धूम इति विशिष्टज्ञानात्मकव्यभिचारज्ञानस्यैव प्रतिबन्धकतयोक्तस्थले न तादृशव्यभिचारज्ञानस्य सत्त्वमिति वाच्यम् । धूमवत्ताज्ञानाविशिष्टवह्न्यभाववत्ताज्ञान-

त्वेनैव विशिष्टज्ञानज्ञानद्वयोभयसाधारणरूपेण हेतुत्वात् । प्राचां सामान्ये पक्षपातात् । न च तथापि व्यभिचारज्ञानस्य व्याप्तिज्ञानविघटनद्वारैवानुमितिप्रतिबन्धकतया यत्र वह्निव्याप्यधूमवान् पर्वत इतिज्ञानोत्तरं पर्वतो वह्न्यभाववानिति बाधनिश्चयस्तत्र व्याप्तिज्ञानस्य वृत्ततया तद्विघटनद्वारा व्यभिचारज्ञानस्यानुमितिप्रतिबन्धकत्वासम्भवेन बाधस्य तत्प्रतिबन्धकतया हेत्वाभासत्वासिद्धिरिति वाच्यम् । तथापि व्यभिचारज्ञानस्य साक्षादनुमितिप्रतिबन्धकतामते बाधस्य हेत्वाभासत्वानुपपत्तेर्दुर्वारत्वादिति चेत्—

न । बाधस्य हेत्वाभासान्तरत्वाभावेऽप्यस्माकं क्षतिविरहादिति दिक् ।

एतेन पक्षतावच्छेदकावच्छेदेन हेतुमत्तापरामर्शात्पक्षतावच्छेदकावच्छेदेनानुमितेस्सर्वसिद्धतया गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ पक्षतावच्छेदकगन्धप्रागभावकालावच्छेदेन गन्धानुमितेर्भ्रमरूपविशिष्टज्ञानत्वं दुर्वारमित्यपि परास्तम् । अतिप्रसङ्गभङ्गाय व्यापकताघटकसम्बन्धेनैव व्यापकस्यानुमितिविषयतया तादृशपरामर्शात्तादृशानुमितेरुपाध्यायादीनामसम्मतत्वेन सर्वसिद्धत्वस्यासिद्धेः । तादृशानुमित्यङ्गीकारे तादृशानुमितौ तादृशपरामर्शस्यातिरिक्तजनकत्वकल्पनेन तादृशानुमितिं प्रति तादृशानुमित्साविरहविशिष्टप्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्र्यादीनां प्रतिबन्धकत्वकल्पनेन च महागौरवप्रसङ्गाच्च ।

यत्तु पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन परामर्शस्य हेतुत्वे शिखरी पर्वतो वह्निव्याप्यवानितिपरामर्शसत्वे विनापि शिखरावच्छेदेन परामर्शशिखरावच्छे-

देनानुमित्युदयेन व्यभिचारः । न च तादृशपरामर्शस्य सत्त्वात्कथं व्यभिचार इति वाच्यम् । देशकालादेरवच्छेदकत्वस्यानुमित्यादावेव भावस्यानुभवसिद्धतया यत्र प्रत्यक्षात्मकात् स्मरणात्मकाद्वा तादृशपरामर्शात्तादृशानुमितिस्तत्र व्यभिचारस्य वज्रलेपत्वादिति—

तदसत् । तादृशानुभवे मानाभावात् । अन्यालिङ्गकानुमितौ व्यभिचारवारणायाव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ निवेशस्यावश्यकतया व्यभिचारासम्भवाच्च । देशकालादेरवच्छेदकत्वस्य परामर्शाविषयत्वे तत्र सामानाधिकरण्येनैवानुमित्युत्पादाच्च ।

ननु भागासिद्धेर्दूषणत्वानुपपत्त्याऽवच्छेदकावच्छेदेन परामर्शादवच्छेदकावच्छेदेनानुमित्यभ्युपगम आवश्यकः । तथा हि भागासिद्धेः पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभाववत्ताज्ञानरूपतया तस्या अवच्छेदकावच्छेदेन हेतुमत्ताज्ञानरूपानुमितिकारणविघटकतयाऽनुमितिदूषणत्वं सम्भवति । त्वन्नये सामानाधिकरण्येन हेतुमत्ताज्ञानस्यानुमितिकारणस्य विघटकत्वं न भागासिद्धेरिति तस्याहेत्वाभासविधया दूषणत्वानुपपत्तिः । अनुमितितत्कारणान्यतरविघटकज्ञानविषयस्यैव हेत्वाभासत्वादिति चेत्—

न । भागासिद्धेरदूषकत्वेऽप्यस्माकं क्षतिविरहात् ।

वस्तुतस्तु अवच्छेदकावच्छेदेन हेतुमत्तापरामर्शस्य सामानाधिकरण्येनानुमितिजनकतया तद्विघटकतयैव तस्याहेत्वाभासविधया दूषणत्वमुपपद्यत एव । अथ तादृशपरामर्शजन्यानुमित्यनन्तरं पक्षे साध्यसन्देहानुदयस्यानुभवसिद्धतया तादृशपरामर्शादवच्छेदकावच्छेदेनानुमित्यभ्युपगम आवश्यकः । अन्य-

था सामानाधिकरण्येन साध्यनिश्चयस्यावच्छेदकावच्छेदेन साध्यसन्देहाप्रतिबन्धकतया तादृशानुभवानिर्वाहादिति चेत्—

न। तादृशानुभवस्य सन्दिग्धतया सन्देहे च लाघवस्य निर्णायकतया तदभावेन प्रत्युत पूर्वोपदर्शिताधिकजनकत्वप्रतिबन्धकत्वकल्पनाप्रयुक्तगौरवेण च तादृशपरामर्शात्तादृशानुमितेरभ्युपगमस्यैवोचितत्वात्।

यत्तु शुद्धसंयोगसम्बन्धेन वह्निव्यापकत्वावगाह्यवच्छिन्नसंयोगसम्बन्धेन हेतुमत्तावगाहिपरामर्शादवच्छेदकावच्छेदेनानुमितिस्वीकारे शुद्धसंयोगसम्बन्धेन वह्निव्यापकतावगाह्यवच्छिन्नसंयोगेन धूमवत्तावगाह्यवच्छिन्नसंयोगसम्बन्धेन वह्निव्यापकतावगाहिवह्निव्याप्यधूमवत्पर्वतकालीनवह्निव्याप्यधूमवान् पर्वत इत्याकारकपरामर्शत्वेनावच्छेदकावच्छेदेनानुमितौ हेतुता न कल्प्यत इति लाघवम्।

मन्मते क्लृप्तहेतुताकात् शुद्धसंयोगेन वह्निव्यापकतावगाह्यवच्छिन्नसंयोगेन धूमवत्तावगाहिपरामर्शादेवावच्छेदकावच्छेदेनानुमितिनिर्वाहात्।

भवन्मते तु तत्रावच्छेदकावच्छेदेनानुमित्यनुरोधेन तादृशपरामर्शस्य हेतुताकल्पनमावश्यकमिति गौरवमिति कैश्चिदुक्तम्—

तदसत्। आपत्तिं प्रति आपाद्यव्यतिरेकनिर्णयाविषया तादृशपरामर्शस्य हेतुत्वे कल्पनीये तत्रापत्तित्वमनिवेश्य हेतुताकल्पनेन क्लृप्तेनैव निर्वाहान्ममापि तादृशहेतुताकल्पनस्यानावश्यकत्वात्।

यदपि उत्पत्तिकालीनो घटो गन्धव्याप्यपृथिवीत्ववानित्याकारकादवच्छेदकावच्छेदेन हेतुमत्तापरामर्शादुत्पत्तिकालावच्छेदेन गन्धाद्यनुमित्यस्वीकारे तादृशपरामर्शात्पक्षतावच्छेद-

कसामानाधिकरण्यमात्रावगाहिनी अनुमितिः स्वीकरणीया। एवं च पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिसिद्धिदशायामननुगतानुमित्सासत्त्वे तादृशानुमितिनिर्वाहाय तादृशेच्छाव्यक्तीनां सिद्धावुत्तेजकताकल्पने गौरवम्। तादृशपरामर्शादवच्छेदकावच्छेदेनानुमितिस्वीकारे च तादृशसिद्धेरवच्छेदकावच्छेदेन साध्यानुमित्यविरोधितया तदुत्तेजकतां विनैव तथाविधाया अनुमितेरुपपत्तिरिति लाघवम्। एतादृशलाघवेन च सिद्धायामवच्छेदकावच्छेदेन गन्धाद्यनुमितौ तत्र तादृश्यां गन्धादिसिद्धेः प्रतिबन्धकतान्तरकल्पने गौरवं फलमुखतया न दूषणावहम्। एवमुक्तावच्छेदकावच्छेदेनानुमित्युपगमे तातादृशानुमित्युत्पत्तिकाले भिन्नविषयकप्रत्यक्षादिवारणाय सामानाधिकरण्यमात्रावगाहिसिद्ध्यभावाघटितायाः अवच्छेदकावच्छेदेन सिद्ध्यभावघटिताया बाधनिश्चयसामान्याद्यभावघटिताया विलक्षणतादृशानुमितिसामग्र्या अधिकप्रतिबन्धकताकल्पने गौरवमपि फलमुखमेव। सामानाधिकरण्यमात्रावगाहिसिद्धिदशायां तादृशानुमित्यसिद्धौ भिन्नविषयकप्रत्यक्षाद्यनुत्पादस्यासिद्ध्या तत्कल्पकाभावेन तादृशानुमितिसिद्धेः। तत्कल्पनायामुपजीव्यत्वादित्यतिनवीनैरुक्तम्—

तदप्यसत्। पक्षताया अनुमितिहेतुत्वानङ्गीकारेणोक्तलाघवासम्भवात्।

वस्तुतस्तु पक्षताया अनुमितिहेतुत्वेऽपि नोक्तलाघवसम्भवः। तथा हि सिद्ध्यादौ न कस्याश्चिदपीच्छायास्तत्तद्व्यक्तित्वेनाभावनिवेशः। अपि तु तत्तद्धर्मप्रकारकेच्छानां सर्वासां तत्तद्धर्मप्रकारकेच्छात्वेनैव घटाद्यनुमितिसामग्रीसमवहितशुद्धानुमितित्वप्रकारकेच्छाबलात् सिद्धवन्ह्याद्यनुमितिवारणाय चोत्तेजकीभूत-

तादृशानुमित्सासु तत्तदनुमित्साभेदा एव निवेश्यन्ते न तु तत्तदनुमित्साभिन्नानां तादृशानुमित्सानां तत्तद्व्यक्तित्वेनोत्तेजकत्वमुपेयते । तथा सति तत्समानकालीनवायुसंयोगादिव्यक्तीनामपि विनिगमनाविरहेण तथात्वप्रसङ्गादिति नोक्तलाघवसम्भावनापि । एतेनावच्छेदकावच्छेदेन हेतुमत्तापरामर्शाद्बाधाभावादिबलादेवावच्छेदकावच्छेदेनानुमितिरुपेयते । तथा सति पक्षतावच्छेदकावच्छिन्नत्वविशिष्टसमवायादिसंसर्गघटितव्यापकताविषयपरामर्शस्य तादृशसंसर्गकानुमितौ हेतुत्वान्तरं न कल्प्यत इति लाघवसम्भवात् । शुद्धसमवायादिसंसर्गघटितव्यापकताज्ञानविशिष्टसमवायादिघटितव्यापकताज्ञानोभयसाधारणरूपेणैव हेतुताया उपगमात् तत्कारणतयैव निर्वाहात् । भवन्मते शुद्धसमवायादिघटितव्यापकताज्ञानाद्विशिष्टसमवायादिसंसर्गकानुमितिर्न जायत इति तादृशानुमितौ विशिष्टसमवायादिघटितव्यापकताधियो हेतुत्वान्तरस्यावश्यकत्वात् । न च विशिष्टसमवायादिव्यापकतायाः शुद्धसमवायादिघटितव्यापकतात्मकाभावादतिरिक्ताभावरूपतया नोक्तव्यापकताज्ञानयोरनुगमसम्भवो विषयानुगमाभावादिति वाच्यम् । वास्तवव्यापकताविषयकत्वस्यानिवेशात् । व्यापकताघटकपदार्थानां परस्परोपश्लेषावगाहित्वस्यैव निवेशनीयत्वात् । विशिष्टसमवायादिघटितव्यापकताधियोऽपि च शुद्धसमवायादिघटितव्यापकताप्रविष्टयावद्वस्त्ववगाहित्वात्तेन रूपेणोभयसंग्रहस्य सुलभत्वादित्यपि परास्तम् । निश्चयत्वस्याप्रामाण्यज्ञानाभावस्य च कारणतावच्छेदककोटौ निवेशानुरोधेनोक्तव्यापकताज्ञानयोः पृथक् पृथक् हेतुत्वस्यावश्यकतयोक्तरीत्यापि लाघवासम्भवादित्यलं प्रसङ्गागतविचारेण । तस्मादनुमितेरपि भ्रमरूपाविशिष्टज्ञानत्वासम्भवेन पूर्वोपदर्शितरीत्याख्या-

तिरेव भ्रम इति निर्व्यूढमिति वदन्ति ।

अत्रोच्यते—असंसर्गाग्रहकालीनरङ्गरजतादिज्ञानद्वयादेव रङ्गादौ रजताद्यर्थिप्रवृत्त्यादिकार्यनिर्वाहोपगमे ज्ञानस्य प्रवृत्त्यादिजनकतायां ज्ञानादिकं प्रति प्रवृत्त्यादिसामग्रीप्रतिबन्धकतायां च यत्र मयैकं विशिष्टज्ञानं निवेशनीयं तत्र भवद्भिरसंसर्गाग्रहकालीनं धर्मधर्मिगोचरं ज्ञानद्वयं निवेश्यम् । तत्रासंसर्गाग्रहस्य तादृशज्ञानद्वयस्य च परस्परमन्यकारणैस्तैश्च सह विशेष्यविशेषणभावे विनिगमनाविरहेण कार्यकारणभाववृद्धिः प्रतिबध्यप्रतिबन्धकभाववृद्धिश्चेति महद्गौरवम् । तदपेक्ष्य ज्ञानलक्षणायाः प्रत्यासत्तित्वमुपेत्य भ्रमप्रत्यभिज्ञादेर्विशिष्टज्ञानरूपतास्वीकार एवोचितः ।

एवं गुरुमते संशयादेरप्यसंसर्गाग्रहकालीनधर्मधर्मिगोचरज्ञानद्वयरूपतया तस्य प्रतिबन्धकतायामपि गौरवं द्रष्टव्यम् । अधिकमग्रे वक्ष्यामः ।

केचित्तु तदसंसर्गाग्रहस्य तत्संसर्गविरोधिग्राह्याभावतद्व्याप्यतदवच्छेदकधर्मवतां ज्ञानाभावकट(स्व?)रूपतया तस्य प्रवृत्त्यादिकार्यजनकतायां गुरुमते गौरवमित्युक्तरीत्या भ्रमस्य न तादृशज्ञानद्वयरूपता । न च नैयायिकमते तस्येदं रजतमिति भ्रमहेतुताया उपेयतया तद्धेतोरिति न्यायेन तत्कार्यं प्रवृत्त्यादिकं प्रत्येव तस्य हेतुत्वमुचितमिति वाच्यम् । प्रथमं गुरोरसंसर्गाग्रहस्य प्रवृत्तिहेतुत्वापेक्षया विशिष्टधियो हेतुत्वे लाघवेन प्रवृत्तेर्विशिष्टज्ञानजन्यत्वसिद्धौ विशिष्टज्ञाने पश्चात्तद्धेतुत्वकल्पने गौरवस्य विशिष्टज्ञानासिद्ध्यधीननिश्चायकत्वेन फलमुखतया विशिष्टज्ञानासिद्धावविरोधित्वात् । अन्यथोपजीव्यविरोधापातात् । एवं भ्रमस्यासंसर्गाग्रहकालीनज्ञानद्वयरूपत्वे शङ्खो न पीत इत्यादिनिश्चयानन्तरोत्पन्नपीतज्ञानस्य भ्रमत्वानु-

पपात्तिः। तदुत्पत्तिदशायामसंसर्गाग्रहसत्त्वात्। एवं रजतभेदाद्यग्रहकालीनरजतादिस्मृतेर्दोषशून्यकालीनाया अपि ज्ञायमानयावद्रजतादिषु रजतत्वादिभ्रमत्वापात्तिः। दोषस्यापि तत्रान्तर्भावे दोषाणामननुगमाद्भ्रमत्वाननुगमः। विशिष्टज्ञानकार्योपयोगितावच्छेदकशरीरे दोषस्यान्तर्भावनीयतयाऽननुगमेन व्यभिचारोऽतिगौरवं च। न च न्यायमते भ्रमेऽननुगतसामग्रीकल्पनस्यावश्यकत्वेन विपरीतगौरवमिति वाच्यम्। तादृशगौरवस्य फलमुखत्वेनादोषतया निवेदितत्वात्। प्रवृत्त्यादौ कार्यविशेषे दोषासंसर्गाग्रहादिघटिताया गुरुशरीराया अननुगतसामग्र्याः प्रयोजकत्वस्य नेदं रजतमिति शाब्दबोधादौ तस्याः प्रतिबन्धकतायाश्च कल्पनमपेक्ष्य तत्र तत्रानुगतविशिष्टबुद्धेस्तथात्वस्य भ्रममात्रे तादृशसामग्र्याः प्रयोजकत्वस्य च कल्पनाया एव लघुत्वाच्च। किं च संवादिप्रवृत्तौ विशिष्टज्ञानं हेतुर्विसंवादिन्यां त्वसंसर्गाग्रह इति सामग्रीभेदेन गुरुमते गौरवम्। न च संवादिप्रवृत्तावप्यसंसर्गाग्रहस्यैव हेतुत्वमिति वाच्यम्। तत्र तत्रासंसर्गाग्रहस्याप्रसिद्ध्या तथावक्तुमशक्यत्वात्।

यत्त्वसंसर्गाग्रहविशेष्यतायास्तदवच्छेदकताया वाऽन्यत्र प्रसिद्धाया अभावो विशेष्यनिष्ठो विशेष्यतावच्छेदकनिष्ठो वा प्रवृत्तिहेतुरिति न सामग्रीभेदप्रयुक्तगौरवमिति—

तदसत्। रजतादौ नेदं रजतमितिभ्रमकालेऽपि रजतादौ तदभावस्य सत्त्वेन तत्र रजतार्थिप्रवृत्त्यापत्तेः। न चातिप्रसङ्गवारणाय धर्मिणो धर्मितावच्छेदकस्य वा भेदेन विशिष्टज्ञानहेतुताया विभिन्नतया नोक्तगौरवमिति वाच्यम्। सर्वत्र विषयनिष्ठप्रत्यासत्त्या विशिष्टज्ञानहेतुत्वेन धर्म्यादिभेदेन हेतुताभेदाभावात्।

अथ गुरुमतेऽपि विषयनिष्ठप्रत्यासत्त्या रजतभेदादिज्ञान-

कालीनज्ञानविषत्वाभाव एव हेतुरुप्यते । रजतादौ नेदं रजतमिति भेदग्रहादेर्विषयताया रजतादावसत्त्वेऽपि तत्कालीनस्वतन्त्रधर्मिज्ञानविषयतायास्तत्र सत्वान्नोक्तातिप्रसङ्ग इति चेत्—

रजतभेदाद्युपस्थितिकालीनरजतत्वादिप्रकारकज्ञानविषयताया अपि रजतादौ प्रवृत्तिप्रतिबन्धकतापत्तेः । न च रजतत्वादिप्रकारकज्ञानविषयताया उत्तेजकत्वान्न दोष इति वाच्यम् , गौरवात् । एवं रङ्गादिवृत्तिभेदाद्यन्तरे रजतादिप्रतियोगिकत्वावगाहिभ्रमस्य रङ्गादिप्रवृत्तिप्रतिबन्धकत्वाय रजतोपस्थितिकालीनभेदग्रह एव प्रतिबन्धको वाच्यः । तथा च रजताप्रतियोगिकभेदवदिदं रजतमितिज्ञानदशायामपि प्रवृत्त्यनुपपत्तिः । रजतप्रतियोगिकत्वासंसर्गाग्रहविषयताविरहविशिष्टभेदाविषयतानिवेशे च महद्गौरवम् । घटभिन्नमिदं रजतमितिज्ञानाद्रङ्गादौ प्रवृत्तिनिर्वाहासम्भवश्चेति प्राहुः ।

नव्यगुरूणां मते भ्रमः

अत्र नव्यगुरवः—भ्रमस्थले ज्ञानद्वयविषयकधर्मधर्मिणोराकांक्षाख्यपदार्थान्तरं स्वीक्रियते । एवं चेदंत्वाद्यवच्छिन्नसाकाङ्क्षरजतत्वादिज्ञानत्वेनैव कार्यविशेषोपयोगिता भ्रमस्येति नेदं रजतत्वादिज्ञानात्केवलस्वतन्त्ररजतोपस्थितिसहिताच्च । दोषासमवधानकालीनादिदं च रजतं चेति समूहालंबनादितो वा न प्रवृत्त्यापत्तिर्न वोपदर्शितगौरवम् । न चोक्तरूपेण प्रवृत्त्यादिहेतुत्वोपगमेऽप्युक्तापत्तिर्दुर्वारा । ईदृशाज्ञानानामपि प्रवर्त्तकधीविषयपुरोवर्त्तिसाकाङ्क्षरजतत्वादिविषयकत्वादिति वाच्यम् । विषयनिष्ठाकाङ्क्षया समं ज्ञानस्यापि निरूप्यनिरूपकभावरूपसम्बन्धोपगमेन रजतत्वादिनिष्ठं यत्पुरोवर्त्ति साकाङ्क्षत्वं तन्निरूपकज्ञानत्वेन हेतुतया भ्रमस्यैव च तादृशाकाङ्क्षानिरूपकत्वात् । न चेयमाकाङ्क्षाज्ञानयोरेव धर्मोऽस्तु किंविषयनिष्ठ-

तोपगमेनेति वाच्यम् । तदिदंविषयकधर्मिज्ञानसाकाङ्क्षात्तदंश-मात्ररजतत्वभ्रमात्मकरजतत्वाज्ञानादितस्तद्विषयकप्रवृत्त्यापत्तेः ।

वस्तुतस्तु विशेष्यविशेषणभाव एवाकाङ्क्षाविशेष्यविशेषण-भावश्च विषयनिष्ठोभयवादिसिद्ध एव । इयान् परं विशेषः—न्यायमते एकधा विषययोरेवासौ गुरुमते च ज्ञानद्वयवि-षययोरपीति । स च विषयतारूपोऽतिरिक्तो वेत्यन्यदेतत् ।

अत एव विशेष्यविशेषणयोराकाङ्क्षावैचित्र्याद्विशेष्यविशेष-णभाववैपरीत्ये भ्रमवैलक्षण्यम् । एवं सम्बन्धभेदेनाप्याकाङ्क्षा-वैलक्षण्याद्भ्रमत्वस्य सम्बन्धविशेषनियन्त्रितत्वमिति वदन्ति ।

तत्र नव्यनैयायिकाः—अप्रामाणिकाकाङ्क्षाख्यातिरिक्तपदार्थे मानाभावः । किं च भ्रमजन्यसंस्कारद्वयाद्भ्रमरूपधर्मधर्मिस्म-रणयोर्भेदस्याप्रमाणिकतयाऽन्यथाख्यातिरूपा स्मृतिर्दुर्वारैव ।

अथ विशिष्टस्मृतौ विशिष्टसंस्कारस्य हेतुतया तादृशकार-णबाधान्न विशिष्टस्मृतिसम्भव इति तत्र स्मृतिद्वयं कल्प्यत इतिचेत्—

रजतत्वादिविशिष्टरङ्गादिगोचरसंस्कारस्मरणयोस्तन्मतेऽप्र-सिद्ध्या तादृशस्मृतित्वसंस्कारत्वाभ्यां कार्यकारणभावस्य तन्मतेऽक्लृप्तत्वात् । अस्मन्मते भ्रमाद्विशिष्टज्ञानरूपाद्विशिष्टसं-स्कारस्यैव तत्र जातत्वात् । एवमेकदा स्मरणद्वयानुपगमे क्रमे-णैव तत्र धर्मधर्मिस्मरणमुपेयम् । तथा च पौर्वापर्ये विनिगमना-विरहो दुर्वारः । तयोर्नियतोद्बोधकसमवधानस्थले एकस्य वि-लम्बे हेत्वभावश्चेत्यादिकमूह्यमिति वदन्तीति ।

वेदान्तिनस्तु अनिर्वचनीयख्यातिरेव भ्रमः । अनिर्वचनीय-**वेदान्तमते भ्रमः ।** स्य सत्त्वेनासत्त्वेन सत्त्वासत्त्वाभ्यां च निर्व-क्तुमशक्यस्य तत्रोत्पन्नप्रातिभासिकरजतस्य ख्यातिरिति तद्वि-वरणादिष्वाहुः—

तदप्यसत् । प्रसिद्धरजतस्य भानेनैव निर्वाहेणानन्तस्थले- निर्वचनीयानन्तरजतोत्पत्तितन्नाशतत्सामग्रीकल्पने गौरवेण चानिर्वचनीयख्यातिवादस्याप्रयोजकत्वात् ।

न च रजतविषयकचाक्षुषे रजतचक्षुःसंयोगस्य हेतुतया रजतचक्षुःसंयोगाभावेन प्रसिद्धरजतचाक्षुषं न सम्भवतीत्यनिर्वचनीयख्यातिरावश्यकीति वाच्यम् । स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वविषयतासमवायघटितसामानाधिकरण्योभयसम्बन्धेन चक्षुःसंयोगविशिष्टचाक्षुष एव चक्षुःसंयोगस्य हेतुतया तदभावेऽपि ज्ञानलक्षणासन्निकर्षेण प्रसिद्धरजतभाने बाधकाभावात् । न च ज्ञानलक्षणायाः संनिकर्षत्वे मानाभाव इति वाच्यम् , सुरभि चन्दनमित्याद्यनुरोधेन तत्संनिकर्षत्वस्यावश्यकत्वात् । न च तत्र चन्दनत्वेन सौरभमनुमीयत इति वाच्यं, सौरभमनुमिनोमीत्यनुव्यवसायाभावेन तथावक्तुमशक्यत्वात् ।

एतेन ज्ञानलक्षणासन्निकर्षाभ्युपगमेन तन्मूलकपर्वतो वह्निमानित्यादिप्रत्यक्षेणैव वह्न्यादिगोचरप्रवृत्त्याद्युपपत्तौ वह्निमानित्याद्यनुमितिमात्रोच्छेदप्रसङ्ग इत्यपि निरस्तम् । तत्र पर्वते वह्निमनुमिनोमीत्याद्यनुव्यवसायेन तदुच्छेदाभावात् ।

यत्तु भ्रमस्थले विषयादिगतदोषस्योभयमतेऽपि हेतुत्वमावश्यकम् । एवं चान्यथाख्यात्युपगमे विषयादिगतदोषस्य रजतादिविषयकप्रत्यक्षत्वं कार्यतावच्छेदकमिति गौरवम् । अनिर्वचनीयख्यात्युपगमे च रजतत्वादिकमितिलाघवमिति तदुपगम एवोचित इति—

तत्तुच्छम् । प्रकारतासम्बन्धेन रजतत्वादेरेव दोषकार्यतावच्छेदकतया गौरवाभावात् । एतेन भ्रमस्थले लौकिकविषयतास्वीकार आवश्यकः । रजतं साक्षात्करोमीत्यादिप्रत्ययात् ।

एवं च लौकिकसन्निकर्षं विना तदसंभवेनानिर्वचनीयख्यातिस्वीकार आवश्यक इत्यपि निरस्तम् । अनन्तानिर्वचयरजनोत्पादिकल्पनमपेक्ष्य क्लृप्तहेतुताकदोषस्यैव लौकिकविषयतानियामकत्वकल्पनात् । किं च दोषस्य रजतादिहेतुत्वमते न तावद्रजतत्वावच्छिन्नं प्रति दोषस्य हेतुत्वं प्रसिद्धरजते व्यभिचारात् । न च विजातीयरजतत्वावच्छिन्ने तद्धेतुत्वमिति वाच्यं, प्रमाणान्तरेण तादृशवैजात्यासिद्धेः । दोषजन्यतावच्छेदकतया तत्कल्पनेऽपि एकं तत् । अपरं च प्रसिद्धरजतसामग्रीजन्यतावच्छेदकं प्रसिद्धानिर्वचनीयसाधारणं चान्यद्रजतत्वमितिजातित्रयकल्पने गौरवम् ।

अपि चानिर्वचनीयरजतांगीकारे तव प्रसिद्धरजनार्थिनः प्रवृत्त्यनुपपत्तिः । न च प्रसिद्धानिर्वचनीययोस्तादात्म्यग्रहात्तदुपत्तिरिति वाच्यं, तदपेक्ष्य रंगरजतयोस्तादात्म्यग्रहस्वीकारस्यैवौचित्यात् । अनन्तानिर्वचनीयरजतोत्पत्त्याद्यकल्पनेन लाघवात् । एवं रजतभेदतद्व्याप्यादीनां ग्रहकालेऽपि रजतोत्पत्तौ बाधकाभावेन तद्भानापत्तिः । एवं रंगे रजतोत्पत्तावुक्तभेदादिनिर्णयवतोऽपि पुरुषान्तरस्य तद्रजतचाक्षुषापत्तिः । चक्षुःसंयोगादिसत्त्वाद्बाधनिर्णयादिप्रतिबन्धकतायाश्च भवद्भिरनभ्युपगमात् । तस्मादन्यथाख्यातिरूप एव भ्रम इति सिद्धम् । 'योन्यथासन्तमात्मानमन्यथा प्रतिपद्यत' इत्यादि भ्रमानुवादकश्रुतिस्वारस्यमप्यत्रैवेति संक्षेपः ।

इति प्रामाण्यवादः समाप्तः ।

# अथ प्रमाणवादः ।

सा च प्रमा प्रत्यक्षानुमित्युपमितिशाब्दभेदाच्चतुर्विधा । तत्करणमपि चतुर्विधम् । प्रत्यक्षानुमानोपमानशब्दभेदात् ।

प्रमाणलक्षणं च प्रमाकरणत्वम् । कुठारादौ भ्रममात्रकरणे
प्रमाण- खण्डचक्षुरादौ चातिप्रसङ्गवारणाय प्रमेति । इंद्रियसन्निक-
लक्षणम् र्षादिवारणाय करणेति । तत्त्वं च व्यापारवदसाधारणकारणत्वम् । इन्द्रियसन्निकर्षादेः साक्षाद्धेतुतया व्यापाराभावेनानतिप्रसङ्गः ।शरीरादिवारणायासाधारणेति । तस्य शरीरात्मसंयोगादिव्यापारवत्त्वेऽपि जन्यज्ञानमात्रे हेतुतया साधारण्यादनतिप्रसंगः ।

न चैवं मनसोऽपि जन्यज्ञानमात्रहेतुतयाऽसाधारण्याभावादव्याप्तिरिति वाच्यं, तस्यापि इन्द्रियत्वेन जन्यप्रत्यक्षत्वावच्छिन्ने मनस्त्वेन वा मानसत्वावच्छिन्ने हेतुत्वेनासाधारण्यात् । न चैवमप्यालोकेऽतिव्याप्तिस्तस्य संयोगव्यापारवत्त्वाच्चाक्षुषत्वावच्छिन्ने हेतुतया साधारणकारणत्वाच्चेति वाच्यं, जातिपर्याप्तावच्छेदकताकप्रमानिष्ठकार्यतानिरूपितकारणतावत्त्वस्य समुदायार्थत्वेनालोकस्य बिडालादिचाक्षुषान्यचाक्षुषत्वावच्छिन्न एव कारणतयाऽनतिप्रसङ्गात् । न चैवमपि विषयेऽतिव्याप्तिस्तस्य विषयत्वेन लौकिकविषयतया प्रत्यक्षत्वावच्छिन्ने हेतुत्वात्संयोगादिव्यापारवत्त्वाच्चेति वाच्यं, कारणतायास्तादात्म्यसम्बन्धानवच्छिन्नत्वेन विशेषणात् । न च प्रतिशरीरं चाक्षुषत्वादिव्याप्यज्ञानवैजात्योपगमे तर्कत्वस्य मानसत्वव्याप्यजातिरूपत्वे तत्वसाक्षात्कारत्वस्य मुक्तिजनकतावच्छेदकजातिरूपत्वे शरीराद्यव्याप्तिनिर्णयश्रवणेष्वतिव्याप्तिरिति वाच्यं, जातावनुभवत्वसाक्षाद्व्याप्यत्वविशेषणात् । तत्त्वं च प्रत्यक्षत्वान्यानुभवत्व-

व्याप्यजात्यव्याप्यत्वे सति अनुभववृत्तित्वम् । तेन चाक्षुषत्वादिसंग्रहः ।

केचित्तु असाधारणेत्यादिविशेषणं न देयं, शरीरात्मादेर्विषयादेश्च प्रमाणत्वेऽप्यदोषात् । प्रत्यक्षप्रमाकरणत्वेनैतेषां विभागाच्च नाधिक्यम् । न चैवं कर्तुरपि करणत्वापत्तिरिति वाच्यं, इष्टत्वात् । उपधेयसंकरेऽप्युपाधेरसंकरेणादोषात् । अत एव विवक्षातः कारकविभक्तयो नाना भवन्तीति शाब्दिकाः । अन्यथा कर्तृत्वकरणत्वादेरसमावेशे विवक्षायाः क्वोपयोगः स्यात् । अत एवात्मानमात्मना वेत्सीत्याद्यपि सङ्गच्छत इत्याहुः ।

वस्तुतस्तु प्रमाविभाजकोपाध्यवच्छिन्नप्रमानिष्ठकार्यतानिरूपितव्यापारसम्बन्धावच्छिन्नकारणतावत्त्वस्य समुदायार्थतया न कोऽपि पूर्वोक्तदोषः । न चैवं प्रत्यक्षप्रमाणेऽव्याप्तिः । चाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुषादिना हेतुत्वस्यावश्यकतया प्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियत्वेन हेतुत्वे मानाभावादिति वाच्यं, प्रत्यक्षत्वावच्छिन्नानुत्पादे चक्षुषाद्यवच्छिन्नाभावकूटस्य प्रयोजकत्वकल्पनापेक्षयेन्द्रियत्वावच्छिन्नाभावस्य प्रयोजकत्वे लाघवेन तथाहेतुत्वस्यावश्यकत्वादिति दिक् ।

प्रत्यक्षनिरूपणम् । तत्र प्रत्यक्षप्रमाकरणं प्रत्यक्षम् । प्रत्यक्षत्वं च घटं साक्षात्करोमीत्यनुगतप्रतीतिसाक्षिको जातिविशेषः । स एव च प्रत्यक्षप्रमालक्षणमपि । न चोपनीतभानानन्तरं तादृशप्रतीत्यनुदयेन लौकिकविषयता तद्व्यञ्जकत्वेनावश्यमुपेयेति । सैव तादृशप्रतीतिविषयोऽस्तु किं जातिविशेषाङ्गीकारेणेति वाच्यं, तस्या नानात्वेन तथानुगतप्रतीत्यनिर्वाहात् । किं चोक्तरीत्या प्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियत्वेन हेतुतया कार्यताव-

च्छेदकतयैव तत्सिद्धिः । न चेन्द्रियत्वस्यानुगतस्य दुर्वचनया तादृशहेतुत्वमसंभवि तेजस्त्वादिना सांकर्येण तस्य जातित्वासंभवादिति वाच्यं, इन्द्रियनिष्ठैकत्वेषु वैजात्यमुपेत्य विजातीयैकत्ववत्वरूपेन्द्रियत्वस्यानुगतस्य सुवचत्वात् ।

यत्तु एकत्वजन्यतावच्छेदकजन्यैकत्वमात्रवृत्तिजात्या सांकर्यान्नेन्द्रियनिष्ठेष्वेकत्वेषु वैजात्याङ्गीकारसंभव इति--

तदसत् । नित्यसाधारणधर्मस्यापि कार्यतावच्छेदकत्वे बाधकाभावेनैकत्वस्यैवैकत्वजन्यतावच्छेदकत्वात् । इन्द्रियत्वावच्छिन्नकारणतानिरूपितकार्यताशालित्वं ज्ञानकरणकत्वव्यभिचार्यनुभवनिष्ठभेदप्रतियोगितावच्छेदकजातिमज्ज्ञानत्वं वा प्रत्यक्षलक्षणं बोध्यम् ।

यत्तु जन्यधीजन्यमात्रवृत्तिजातिशून्यज्ञानत्वं प्रत्यक्षलक्षणमिति—

तदसत् । यथाकथञ्चिज्जन्यत्वस्य निवेशे निर्विकल्पकस्यापि कालोपाधिमुद्रया जन्यधीजन्यत्वेन चाक्षुषत्वमादायाव्याप्तेः। जन्यधीत्वस्य जनकतावच्छेदकत्वविवक्षणे लिंगज्ञानत्वादिना मनस्त्वादिना वावच्छिन्नकरणताकेऽनुमित्यादावतिव्याप्तेः । जन्यधीत्वस्य जनकतावच्छेदकत्वाप्रसिद्धेश्च ।

सा च प्रत्यक्षप्रमा लौकिकालौकिकभेदेन द्विविधा । लौकिकसन्निकर्षप्रयोज्यविषयताशालित्वं लौकिकत्वम् । अलौकिकसन्निकर्षप्रयोज्यविषयताशालित्वं चालौकिकत्वम् ।

तत्र लौकिकसन्निकर्षः षड्विधः- संयोग—संयुक्तसमवाय—संयुक्तसमवेतसमवाय—समवाय—समवेतसमवाय—विशेषणताभेदात् ।

तत्र संयोगेन द्रव्यग्रहः । चक्षुरादिसंयुक्तस्यैव घटादेश्चक्षु-

रादिना ग्रहात् । संयुक्तसमवायेन शब्देतरगुणकर्मद्रव्यगतजातीनां ग्रहः । चक्षुरादिसंयुक्तघटादिसमवायेनैव घटरूपादिग्रहात् । संयुक्तसमवेतसमवायेन शब्देतरगुणकर्मगतजातीनां ग्रहः । चक्षुरादिसंयुक्तघटादिसमवेततद्रूपादिसमवायेन गुणत्वरूपत्वनीलत्वादिग्रहात् । समवायेन शब्दग्रहः । श्रोत्रस्य कर्णशष्कुल्यवच्छिन्ननभोरूपतया तत्समवायेन शब्दग्रहात् । समवेतसमवायेन शब्दसमवेतस्य ग्रहः । श्रोत्रसमवेतशब्दसमवायेन सत्वगुणत्वशब्दत्वकत्वादिग्रहात् । विशेषणतया समवायाभावयोर्ग्रह इति विवेकः ।

ननु संयुक्तसमवेतसमवायेनैव द्रव्यतत्समवेतयोर्ग्रहसंभवे संयोगसंयुक्तसमवाययोः सन्निकर्षत्वमनर्थकं समवेतप्रत्यक्षत्वस्यैव तज्जन्यतावच्छेदकत्वोपगमात् । नचात्मतत्समवेतग्रहस्य तेनासंभवात्तयोः सन्निकर्षत्वमावश्यकमिति वाच्यम् । तावता मनःसंयोगतत्संयुक्तसमवाययोः सन्निकर्षत्वसिद्धावपि चक्षुरादिसंयोगतत्संयुक्तसमवाययोः सन्निकर्षत्वस्यासिद्धेरिति चेत्—

मैवम् । परमाण्वादिघटितसन्निकर्षात् द्व्यणुकादौ पृथिवीत्वादिप्रत्यक्षवारणाय चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवेतसमवायत्वादिनैव सन्निकर्षत्वं वाच्यम् । तथा च त्रुटितत्समवेतप्रत्यक्षे व्यभिचारवारणाय द्रव्यान्यस्मिन्यत्समवेतं तच्चाक्षुषत्वादिकमेव तज्जन्यतावच्छेदकं वाच्यमिति । तेन द्रव्यतत्समवेतप्रत्यक्षस्यासंग्रहेण तदनुरोधेन तयोः सन्निकर्षत्वस्यावश्यकत्वात् ।

केचित्तु परमाणुद्व्यणुकानंगीकर्तॄणां नव्यानां त्रुटितत्समवेतप्रत्यक्षस्य तेनानिर्वाहेण तयोः सन्निकर्षत्वमावश्यकमित्याहुरित्यधिकमन्यत्रानुसन्धेयम् ।

ननु चक्षुःसंयोगस्य चाक्षुषहेतुत्वं विचारासहं तज्जन्यताव-

च्छेदकस्य दुर्वचत्वात् । तथा हि द्रव्यचाक्षुषत्वं न तज्जन्यतावच्छेदकं, अलौकिकचाक्षुषे व्यभिचारात् । नापि द्रव्यलौकिकविषयताशालिचाक्षुषत्वं रूपाद्यविषयकद्रव्यलौकिकचाक्षुषानुदयेन तदवच्छिन्नस्य विषयताया रूपादावप्युत्पत्त्या व्यभिचारात् । नापि द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वम् । शुक्त्यादौ रजतादिभ्रमानन्तरं रजतं पश्यामीत्यादिमतीत्युदयेन भ्रमविषयेऽपि दोषप्रयोज्यलौकिकविषयता नवीनैरुपगमेन तत्र व्यभिचारादिति चेत्—

न । स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वविषयतासमवायोभयघटितसामानाधिकरण्योभयसम्बन्धेन चक्षुःसंयोगवैशिष्ट्यस्य कार्यतावच्छेदककोटौ निवेशेन दोषाप्रयोज्यद्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वस्य वा कार्यतावच्छेदकत्वात् । तत्तत्पुरुषीयत्वस्य कार्यताकारणतावच्छेदकयोर्निवेशाच्च पुरुषान्तरीयचक्षुःसंयोगकालेन पुरुषान्तरस्य चाक्षुषापत्तिः । अनयैव दिशा चक्षुःसंयुक्तसमवायतत्समवेतसमवाययोरपि कार्यतावच्छेदकमूह्यम् । अतो न कोऽपि दोषः ।

अत्रेदं बोध्यम् । अन्धकारे घटादौ चक्षुःसंयोगसत्त्वेन चाक्षुषवारणाय द्रव्यचाक्षुषे आलोकसंयोगस्यापि हेतुत्वमुपेयम् । तज्जन्यतावच्छेदकं चानभिभूतरूपवत्तेजोभिन्नद्रव्यचाक्षुषत्वमतो न तेजःप्रत्यक्षे व्यभिचारः । सुवर्णचाक्षुषसंग्रहायानभिभूतरूपवदिति तेजो विशेषणम् ।

यद्वालोकवृत्तिसंयोगत्वेन हेतुता । आलोकेऽप्यालोकवृत्तिचक्षुरादिसंयोगसत्त्वान्न व्यभिचारः । आलोकत्वं चोद्भूतानभिभूतरूपवन्महत्त्ववत्तेजस्त्वम् । उद्भूतेत्यादिनोष्मस्वर्णतेजोऽणूनां निरासः । वह्निरूपं नाभिभूतं, किन्तु तद्गतं शुक्लत्वं रक्तत्वा-

दिना वह्निरूपग्रहात् ।

यद्वा वह्नित्वादिविरुद्धप्रभात्वमेवालोकत्वम् । वस्त्वादेरपि तन्मध्यवर्तिनी प्रभैव व्यञ्जिका । प्रभाद्व्यणुकवारणाय महत्त्वमात्रं निवेश्यम् । न चान्धकारे विडालादेः साञ्जनपुरुषादेश्च चाक्षुषोदयेन व्यभिचार इति वाच्यं, तत्तदन्यद्रव्यचाक्षुष एवालोकसंयोगस्य हेतुत्वात् ।

नव्यास्तु विजातीयचाक्षुषत्वमेवालोकसंयोगजन्यतावच्छेदकम् । वैजात्यं चेदं विडालादिचाक्षुषव्यावृत्तमतो न तत्र व्यभिचारः ।

वस्तुतस्तु आलोकसंयोगस्य तत्त्वेन स्वातंत्र्येण न हेतुत्वं, किन्तु आलोकसंयोगावच्छिन्नतत्पुरुषीयचक्षुस्संयोगत्वेन तत्पुरुषीयचक्षुस्संयोगावच्छिन्नालोकसंयोगत्वेन वा हेतुत्वम् । उभयथाऽपि पुरुषभेदेन हेतुत्वस्य भिन्नतया विडालादिपुरुषान्तर्भावेण तादृशे हेतुत्वाकल्पनान्न कोऽपि दोष इति प्राहुः ।

## अथ सुवर्णस्य तैजसतावादः ।

अत्र प्रसंगात्सुवर्णे तैजसत्वं विचार्यते ।

मीमांसकमतम् अत्र मीमांसकाः—सुवर्णं पार्थिवं, नैमित्तिकद्रवत्वात्, घृतवदित्यनुमानेन सुवर्णं पार्थिवम् । न च सुवर्णस्य पृथिवीत्वे तदीयद्रवत्वस्याग्निसंयोगेन नाशापत्तिर्घृतादिद्रवत्ववदिति वाच्यं, सुवर्णद्रवत्वव्यावृत्तविजातीयद्रवत्वनाशत्वस्यैवाग्निसंयोगजन्यतावच्छेदकत्वात् । न च वैजात्ये मानाभाव इति वाच्यम् । आश्रयनाशजन्यद्रवत्वनाशे व्यभिचारवारणायाश्रयनाशाजन्यत्वनिवेशे गौरवेण लाघवादाश्रयनाशनाश्यद्रवत्वव्यावृत्तवैजात्यनिवेशस्यावश्यकतया तस्य सुवर्णद्रवत्वव्यावृत्त-

स्यैव सिद्धेः । न चात्र पीतरूपविशेषवद्द्रव्यात्मकसुवर्णस्य पक्षत्वे उपष्टम्भकपृथिव्यंशमादाय सिद्धसाधनम् । तैजससुवर्णस्य पक्षत्वेऽप्रसिद्धिरिति वाच्यं, सुवर्णपदवाच्यत्वस्यात्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वस्य वा पक्षतावच्छेदकत्वात् । न च धर्मशास्त्रादौ पीतद्रव्यविशेषस्यापि सुवर्णपदवाच्यतया सिद्धसाधनमिति वाच्यं, अवच्छेदकावच्छेदेन साध्यसिद्धावंशतः सिद्धसाधनस्यादोषत्वादित्याहुः ।

अत्र नैयायिकाः—उक्तानुमानस्याप्रयोजकतया सुवर्णे पृथिवीत्वसिद्धिर्न संभवतीति । तत्र तैजसत्वमेवोपेयते । तत्र मानं च सुवर्णं तैजसं, अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वात्, यन्नैवं तन्नैवं, यथा घृतादिकमिति केवलव्यतिरेक्यनुमानमेव । न चाप्रयोजकत्वम् । 'अग्नेरपत्यं प्रथमं हिरण्यमिति' श्रुतेरेवानुकूलतर्कत्वात् । न चोक्तहेतोरसाधारणतया दुष्टत्वमिति वाच्यं, असाधारणस्य सत्प्रतिपक्षोत्थापकतया दूषकत्वेन तस्य च तुल्यबलत्व एव संभवेन साध्याभावसाधनेऽनुकूलतर्कविरहेण साध्यसाधने चोक्ततर्कसत्वेन तुल्यबलत्वाभावेन तस्यादोषत्वात् । न च सुवर्णस्य तैजसत्वे तत्र पीतरूपगुरुत्वयोरनुपपत्तिरिति वाच्यं, तयोरुपष्टम्भकभागगतत्वात् । न च हेतुस्थमत्यन्तत्वं दुर्वचमिति वाच्यं, महरात्मकादिस्थूलकालीनत्वस्यैव प्रकृते तत्त्वात् । युज्यते चैतत् । अन्यथाऽत्यन्ताग्निसंयोगेन पीतरूपवन्निष्ठद्रवत्वनाशापत्तिः ।

नैयायिकमतम् (margin: नैयायिकमतम्)

मन्मते तु जलसम्बन्धिघृतादावग्निसंयोगोऽपि द्रवत्वादिनाशानुत्पत्त्या नैमित्तिकद्रवत्वादिनाशं प्रति पार्थिवान्यद्रवद्रव्यसंयोगस्य प्रतिबन्धकतया तैजसद्रुतसुवर्णात्मकद्रव्यसम्बन्धस्य प्रतिबन्धकस्य सत्वान्नोक्तापत्तिः संभवतीति । न च सुवर्ण-

स्य तैजसत्वे पुटपाकदशायां कथं तत्र रक्तरूपोपलब्धिरिति वाच्यं, तत्रौषधगतरक्तरूपोपलब्ध्युपगमात् । न च सुवर्णस्य तैजसत्वे तद्गतशुक्लभास्वररूपप्रत्यक्षापत्तिरिति वाच्यं, उपष्टम्भकपृथिव्यंशगतपीतरूपेण तस्याभिभवात् । न चैवमप्यन्धकारे तद्ग्रहापत्तिः । बलवत्सजातीयग्रहणप्रयुक्ताग्रहणस्यैवाभिभवतया तदानीं पीतरूपग्रहेण तस्याभिभावकत्वासंभवादिति वाच्यं, लाघवेनात्र सजातीयसम्बन्धस्यैव तत्त्वेनान्धकारेऽपि तत्त्वाश्रयपार्थिवसंयोगिसमवेतत्वात्मकसम्बन्धस्य सत्वादिति ।

अत्र मीमांसकनव्याः—उक्तानुमानान्न सुवर्णे तेजस्त्वसिद्धिः । अत्यन्तानलेत्यादिहेत्वसिद्धेः । न चैवं तत्रात्यन्तानलसंयोगेन द्रवत्वोच्छेदापत्तिरिति वाच्यं, इष्टापत्तेः । अत एव सुवर्णं द्रुतं द्रुततरं द्रुततममितिप्रतीतेरप्युपपत्तिः । न चैवं तत्र द्रवत्वस्यात्यन्तोच्छेदापत्तिरिति वाच्यं, सुवर्णेऽग्निसंयोगात्पूर्वद्रवत्वनाशकाले द्रवत्वान्तरोत्पादकसामग्र्या नियमतः स्वीकारात् ।

मीमांसकनव्यमतम्

वस्तुतस्तु उपदर्शितयुक्त्या विजातीयद्रवत्वनाशं प्रत्येवाग्निसंयोगस्य हेतुतया सुवर्णद्रवत्वे तादृशवैजात्यानुपगमेन तादृशकारणबलाच्च सुवर्णद्रवत्वनाशापत्तिः ।

यत्तु तत्राग्निसंयोगात्पीतरूपनाशाद्यापत्तिवारणाय पीतरूपादिनाशप्रतिबन्धकत्वेन क्लृप्तस्य द्रवद्रव्यसम्बन्धस्य घटकतया द्रवद्रव्यं किञ्चित्सिद्ध्यति । तच्च द्रव्यं न पृथिवी, पार्थिवद्रव्यसम्बन्धस्य रूपनाशाद्यप्रतिबन्धकत्वात् । नापि जलं, निस्स्नेहवत्त्वात् । अतस्तदुभयभिन्नत्वेन तेजस्त्वं सिद्ध्यतीति—

तदसत् । सुवर्णद्रव्यग्निसंयोगे रूपनाशकतावच्छेदकवैजात्यानुपगमेन विजातीयाग्निसंयोगाभावेनैव च तत्र पीतरूपनाशापत्ति-

वारणसंभवेन तत्र द्रवद्रव्यसम्बन्धस्य प्रतिबन्धकत्वे माना- भावात् । तस्मात् सुवर्णं पार्थिवं, नैमित्तिकद्रवत्वात्, घृतवदि- त्यनुमानेन सुवर्णाख्यातिरिक्ततेजोन्तराकल्पनप्रयुक्तलाघवतर्क- सहकृतेन सुवर्णस्य पार्थिवत्वमेव सिद्ध्यतीत्याहुः—

तदसत् । तथाऽपि 'अग्नेरपत्यं प्रथमं हिरण्यमि'ति श्रुत्या सुवर्ण- स्यतेजस्त्वासिद्धेर्दुर्वारत्वात् । न च तस्या अग्नेर्निमित्तकारणतामा- दायाप्युपपत्त्या न तेजस्त्वसाधकत्वमिति वाच्यं, तस्या उपादान- प्रकरणस्थत्वेन तथावक्तुमशक्यत्वादिति दिक् ।

यत्तु मणिकारस्य वायुप्रत्यक्षताविचारे मीमांसकं प्रति य- दि उद्भूतस्पर्शवत्त्वस्य बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति प्रयोज- कत्वमुपेत्य वायोः प्रत्यक्षं त्वयोपेयते तदा सुवर्णरूपतेजोद्रव्य- मनुद्भूतरूपमनुभूतस्पर्शं प्रत्यक्षं न स्यादिति दूषणमुखेन सुवर्ण- तैजसतावादस्यावतारणम्—

तन्न सम्यक् । उद्भूतरूपवत्सुवर्णस्योद्भूतस्पर्शवत्त्व- नियमात् । यथा सुवर्णस्य चाक्षुषत्वानुपपत्तिरुद्भूतरूपे मानं तथा त्वगिन्द्रियवेद्यत्वानुपपत्तिरुद्भूतस्पर्शे मानम् । न हि सुवर्णं न त्वगिन्द्रियवेद्यमिति वक्तुं शक्यम् । न चैवं त्वचा सुवर्णत्वग्रहापत्तिः जातेर्व्यक्तिग्राहकग्राह्यत्वादिति वा- च्यं, सुवर्णत्वजातेः सुवर्णगतजातिविशेषव्यंग्यत्वात् । अत एव निकषपाषाणापेक्षा । अन्यथा पद्मरागादेरपि त्वगिन्द्रियावेद्यतया तत्राप्युद्भूतस्पर्शो न स्यात् । तस्मात् प्रसंगादेव सुवर्णतैजसता- वादारम्भ इत्येव रमणीयमाभाति ।

इति सुवर्णतैजसतावादः समाप्तः ।

एवं बहिर्द्रव्यप्रत्यक्षे महत्वोद्भूतरूपयोरपि हेतुत्वे तेन परमा- णुवायुचक्षुरादीनां न प्रत्यक्षमिति ।

ननु आलोकसंयोगानवच्छेदकावयवावच्छेदेन चक्षुःसंयोगसत्त्वे चाक्षुषवारणाय स्वावच्छेदकावच्छेद्यत्वसम्बन्धेनालोकसंयोगाविशिष्टचक्षुःसंयोगत्वेन हेतुत्वं वाच्यम्। तत्र विशेष्यविशेषणभावे विनिगमनाविरहेण कार्यकारणभावद्वयमवच्छेदकगौरवं च। एवं कम्बुग्रीवाद्यनवच्छिन्नचक्षुःसंयोगादिसत्त्वे घटादिप्रत्यक्षवारणाय घटादिप्रत्यक्षे कम्बुग्रीवाद्यवयवावच्छिन्नचक्षुःसंयोगत्वादिना हेतुत्वे गौरवमिति तदपेक्ष्य लाघवेन विजातीयचक्षुःसंयोगस्यैव द्रव्यचाक्षुषहेतुत्वं वाच्यम्। उक्तस्थले च तदभावादेव नोक्तापत्तिः। एवं चालोकसंयोगस्य महत्त्वोद्भूतरूपयोश्च हेतुत्वमनर्थकम्। वैजात्यस्य फलबलकल्प्यत्वेनान्धकारे घटादिचक्षुःसंयोगे वैजात्यानभ्युपगमात् परमाणुवायुचक्षुरादिचक्षुःसंयोगेऽपि वैजात्यानभ्युपगमात् विजातीयचक्षुःसंयोगरूपकारणविरहादेव तत्कार्य्यापत्तिविरहादिति चेत्—

न। अन्धकारकालीनचक्षुःसंयोगस्यैवालोकसमवधाने प्रत्यक्षजनकत्वेनाभावप्रत्यक्षे विजातीयचक्षुःसंयोगवद्विशेषणतायाः प्रत्यासत्तित्वेन भूतलादावन्धकारप्रत्यक्षानुरोधेन चान्धकारेऽपि घटभूतलादिचक्षुःसंयोगे वैजात्योपगमस्यावश्यकत्वेन घटभूतलादिचाक्षुषवारणाय तत्रालोकसंयोगहेतुत्वस्यावश्यकत्वात्। एवं यत्रैकयैव क्रियया घटादौ परमाण्वादौ च चक्षुःसंयोगो जातस्तत्र वैजात्यनियामकस्यैकत्वेन घटादिचक्षुःसंयोगादाविव परमाण्वादिचक्षुःसंयोगेऽपि वैजात्योपगमस्यावश्यकतया परमाण्वादिप्रत्यक्षवारणाय महत्त्वोद्भूतरूपयोश्चाक्षुषहेतुत्वमावश्यकम्। न च घटादिरूपतत्तदुत्तरदेशस्यापि विशिष्य वैजात्यावच्छिन्नहेतुत्वमुपेत्य वैजात्यस्य परमाण्वादिचक्षुः-

संयोगसाधारण्यं वारणीयमिति वाच्यम् । अनन्तहेतुत्वकल्पनामपेक्ष्य महत्त्वोद्भूतरूपयोर्हेतुत्वकल्पनस्यैवोचितत्वात् ।

अथ कर्मजस्य संयोगजस्य च चक्षुःसंयोगस्य चाक्षुषजनकतया कर्मजन्यतावच्छेदकसंयोगजन्यतावच्छेदकजातिभ्यां संकरान्नोक्तवैजात्यकल्पनासंभवः । न च कर्मज एव संयोगश्चाक्षुषहेतुरुन्मीलनादिक्रियानुविधानादिति वाच्यं, चक्षुःसंयुक्ते कपालादावुत्पन्नेन घटादिना संयोगजस्यापि चक्षुःसंयोगस्य संभवादिति चेत्—

अत्राहुः—आत्मादौ रूपाद्यभावस्य चाक्षुषत्वे आत्मादिवृत्तिचक्षुःसंयोगसाधारणमात्ममनःसंयोगसाधारणं च तद्वैजात्यं कर्मजन्यतावच्छेदकजातिव्याप्यमेव । आत्मादौ चक्षुरादिसंयोगस्य कर्मजस्यैव संभवात् । न चात्मादिसंयुक्ते चक्षुराद्यवयवे जातस्य चक्षुरादेः संयोगजोऽप्यात्मादिसंयोग इति वाच्यं, तथाप्यात्मनः संयोगस्य कर्मजत्वनियमादिति । बहिर्द्रव्यप्रत्यक्षे चोद्भूतरूपस्य रूपत्वेनैव हेतुत्वम् । नीलत्वादिव्याप्यानुद्भूतत्वाभावकूटरूपस्योद्भूतत्वस्य कारणतावच्छेदकत्वे विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताबाहुल्यादवच्छेदकगौरवाच्च । अनुद्भूतरूपाभावस्य स्वातंत्र्येण हेतुत्वादेव चक्षुरादीनां न प्रत्यक्षम् । एवं द्रव्यस्पार्शने अनुद्भूतस्पर्शाभावस्य हेतुता कल्प्यते । तेन प्रभाया न स्पार्शनम् । द्रव्यस्पार्शने स्पर्शस्य च न हेतुत्वम् । निस्स्पर्शानां गगनादीनां नीरूपत्वेन रूपहेतुतयैव प्रत्यक्षवारणात् । तत्र रूपहेतुतायां कारणस्य प्रत्यासत्तिः समवायः । कार्यस्य द्रव्यवृत्तिलौकिकविषयताकार्यतावच्छेदकं च बहिर्द्रव्यप्रत्यक्षत्वम् । तच्च मानसान्यप्रत्यक्षत्वम् । मानसान्यत्वनिवेशादात्ममानसेन व्यभिचारः । द्रव्यविषयकप्र-

क्षस्य गुणादावपि विषयतयोत्पत्त्या तत्र व्यभिचारवारणाय कार्यतावच्छेदकप्रत्यासत्तौ द्रव्यवृत्तित्वस्य विशेषणत्वावश्यकत्वे कार्यतावच्छेदककोटौ द्रव्यविषयकत्वेन निवेशनीयम् । प्रयोजनाभावात् । किञ्चिदंशे लौकिकस्यापि प्रत्यक्षस्योपनीतनीरूपपदार्थेऽपि विषयतयोत्पत्तेः । तत्र व्यभिचारवारणाय लौकिकविषयतायाः प्रत्यासत्तित्वावश्यकत्वेन कार्यतावच्छेदककोटौ लौकिकत्वमपि न निवेशनीयम् ।

यद्यप्येवं प्रत्यक्षत्वनिवेशनमफलं प्रत्यक्षेतरस्य लौकिकविषयतासम्बन्धेनानुत्पत्तेर्व्यभिचारानवकाशात्, तथापि नित्यानित्यवृत्तिधर्मस्य कार्यतावच्छेदकत्वस्य सिद्धान्तविरुद्धतया गगनादिसाधारणमानसान्यत्वमात्रस्य कार्यतावच्छेदकत्वासम्भवात्प्रत्यक्षत्वानिवेशः । न च प्रत्यक्षत्वमपीश्वरसाधारणम् । अतस्तद्दोषतादवस्थ्यमिति वाच्यं, ईश्वरप्रत्यक्षव्यावृत्तजन्यप्रत्यक्षवृत्तिजातिविशेषस्यैव कार्यतावच्छेदकत्वात् । ईश्वरज्ञाने प्रत्यक्षत्वव्यवहारस्य कार्यमात्रे उपादानलौकिकप्रत्यक्षस्य हेतुतया धर्मिग्राहकमानासिद्धलौकिकविषयतानिबन्धनत्वेन प्रत्यक्षत्वजातेस्तत्साधारण्ये मानाभावाच्च । न च मानसान्यप्रत्यक्षं प्रति रूपस्याहेतुत्वे वायोः स्पार्शनप्रत्यक्षानुपपत्तिरिति वाच्यं, वायोरतीन्द्रियतया तज्ज्ञानस्य स्पर्शादिलिंगकानुमितिरूपतया इष्टापत्तेः । शीतो वायुरित्यारोपोऽपि मानस एवेति न्यायवैशेषिकसिद्धान्तात् । न च लाघवाच्चाक्षुषत्वावच्छिन्नं प्रत्येव रूपस्य हेतुतया वायोः स्पार्शने बाधकाभाव इति वाच्यं, तथा सति गगनादीनां स्पार्शनवारणाय द्रव्यस्पार्शने स्पर्शस्य हेतुत्वान्तरकल्पने गौरवात् । एतेन मानसान्यप्रत्यक्षं प्रति स्पर्श एव हेतुरिति वायोः स्पार्शने बाधकाभाव इति निरस्तम् । तथा सति वायोश्चाक्षुषापत्त्या रूप-

स्यापि चाक्षुषे हेतुत्वान्तरकल्पने गौरवापत्तिरिति संप्रदायः ।

अत्र दीधितिकारानुयायिनो नव्याः—मानसान्यप्रत्यक्षस्य

दीधितिकारानुयायिनो नव्या वायुप्रत्यक्षे

रूपजन्यतावच्छेदकत्वापेक्षया लाघवाच्चाक्षुषत्वस्यैव तथात्वमुचितमिति वायुः स्पार्शनविषय एव । अत एव त्वग्व्यापारानन्तरं विनैव लिंगादिज्ञानं वायुर्वातीति सर्वजनानुभवः । न चैवं निस्स्पर्शस्य गगनादेः स्पार्शनवारणाय द्रव्यस्पार्शनं प्रति स्पर्शस्य हेतुत्वान्तरं कल्पनीयमिति गौरवम् । तदपेक्ष्य मानसान्यप्रत्यक्षत्वस्यैव रूपजन्यतावच्छेदकत्वमुचितमिति वायोरतीन्द्रियत्वमेवेति वाच्यं, मानसान्यत्वप्रत्यक्षत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताद्वयस्य भवन्मतेऽप्यावश्यकत्वात् । अवच्छेदकगौरवस्य पुनरधिकत्वात् । न च सामानाधिकरण्यसम्बन्धेन मानसान्यत्वस्य प्रत्यक्षत्वविशेषणत्वे वैपरीत्येन विनिगमनाविरहः स्यात् । तदेव न किन्तु आत्ममानसे व्यभिचारवारणायात्मभिन्नत्वं प्रत्यासत्तिघटकद्रव्यांशे विशेषणमित्युपेयम् । तत्र च न विशेष्यविशेषणभाववैपरीत्यमिति वाच्यं, विषयनिष्ठसम्बन्धतावच्छेदकतायां विशेष्यविशेषणभावापन्नयोर्द्रव्यत्वात्मभिन्नत्वयोः प्रत्येकमतिप्रसक्ततयानवच्छेदकत्वेनावच्छेदकताया व्यासज्यवृत्तित्वस्याभावेन च सामानाधिकरण्यसम्बन्धेन एकविशिष्टापरस्यावच्छेदकत्वस्य वाच्यतया विशेष्यविशेषणभावे विनिगमनाविरहस्य दुर्वारत्वात् ।

ननु द्रव्यस्पार्शनं प्रति स्पर्शत्वेन हेतुत्वान्तरकल्पनामपेक्ष्य लाघवाच्चाक्षुषस्पार्शननिष्ठः प्रत्यक्षत्वावान्तरजातिविशेषो रूपजन्यतावच्छेदकतया स्वीक्रियत इति वायोरतीन्द्रियत्वमेवोचितम् । न च त्रुटिस्पार्शनवारणाय स्पार्शनप्रत्यक्षे त्रुटिमहत्त्व-

व्यावृत्तं जातिविशेषमभ्युपेत्य तेन रूपेण महत्त्वस्य हेतुताकल्पनमावश्यकम् । एवं च तादृशजातिविशेष एव निस्स्पर्शद्रव्यवृत्तिमहत्त्वव्यावृत्तः स्वीक्रियत इति तादृशमहत्त्वाभावादेव गगनादीनां स्पार्शनवारणसंभवेन द्रव्यस्पार्शनं प्रति स्पर्शत्वेन हेतुतास्माभिरपि न कल्पनीयेति किंगौरवमिति वाच्यं, त्रुटेः स्पार्शनोपगमे क्षतिविरहात् । अत एव त्रुटेरस्पार्शनत्वे तु प्रकृष्टपरिमाणवत्त्वमपि तथेतिदीधितिकारेणाभिहितम् । तदस्पार्शनत्वस्य निर्विवादतायां तथाविधोक्तेरसंगत्यापत्तेरिति चेत् —

न । अनुद्भूतस्पर्शादौ मानाभावेन प्रभादीनां स्पार्शनस्यानुद्भूतस्पर्शाभावहेतुतया वारणासंभवेन द्रव्यस्पार्शनं प्रति स्पर्शत्वेन हेतुतायाः सर्वमतेऽप्यावश्यकत्वात् ।

अथ भवन्मते द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नस्य रूपजन्यत्वापेक्षाया मूर्तवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नस्य तथात्वे गौरवविरहाद्विनिगमनाविरहेण तदवच्छिन्नं प्रत्यपि रूपहेतुतासिद्धिर्निष्प्रत्यूहैवेति न वायोः प्रत्यक्षतासंभव इति चेत् —

न । वायुप्रत्यक्षसन्देहेन प्रत्यक्षत्वादेर्व्यभिचारिवृत्तित्वेनसंदिग्धतया विना लाघवं तदवच्छिन्नस्य जन्यताकल्पनासंभवात् । लाघवज्ञानाभावसहितस्य व्यभिचारसन्देहस्यापि कारणतानिश्चयविरोधित्वात् ।

किं च मूर्तत्वजातौ मानाभावेनोक्तविनिगमनाविरहासंभवः । न च स्पन्दसमवायिकारणतावच्छेदकतया तत्सिद्धिरिति वाच्यं, तत्र मूर्तत्वेनाहेतुत्वेऽप्यसमवायिकारणतावच्छेदकजातिविशेषाक्रान्तनोदनाभिघाता(१)दीनाममूर्तेनाभ्युपगमादेव तत्र स्पन्दाप-

(१) नोदन संयोगविशेषः । येन संयोगेन जनितं कर्म संयोगिनोः

त्तेरसंभवात्तादृशरूपेण समवायिकारणताया अप्रामाणिकत्वात् । क्रियाविशेषजनकेश्वरादिसंयोगस्येश्वरादिसाधारण्येऽपि न तत्र स्पन्दापत्तिः । तत्र विजातीयसंयोगसम्बन्धेनात्मत्वेनैव हेतुत्वात् । स्वस्मिंश्च संयोगेन स्वस्यासत्वादिति वदन्ति ।

केचित्तु वायोरतीन्द्रियतामते प्रकारान्तरेण गौरवाद्वायुप्रत्य-
वायोरपि प्रत्यक्षमिति क्षता स्वीक्रियते । त्वक्संयुक्तपरमाणुप्रभागगना-
केषाञ्चिन्नव्यानां मतम् दिसमवायबलात् द्रव्यत्वादीनां स्पार्शनवारणाय द्रव्यसमवेतस्पार्शनं प्रति त्वक्संयुक्तसमवायहेतुतायां त्वक्संयुक्तदले स्पार्शनाविषयत्वं विषयतया स्पार्शनवत्वं चोपलक्षणतया निवेशनीयम् । तथा च वायुस्पर्शस्पार्शने व्यभिचार इति तज्जन्यतावच्छेदके स्पर्शान्यत्वमधिकं द्रव्यसमवेतांशे निवेशनीयम् । तेन च समं विशेषणान्तरस्य विशेष्यविशेषणभावे विनिगमनाविरहात्कारणताधिक्यम् । तथा स्पर्शस्पार्शनानुरोधेन स्पार्शनवत्वमनिवेश्य त्वक्संयुक्तसमवायस्यापरमपि हेतुत्वं कल्पनीयमिति गौरवम् ।

अथोक्तरीत्या संयुक्तसमवायो न प्रत्यक्षहेतुः किन्तु द्रव्यस्पार्शने त्वक्संयोगः । समवेतस्पार्शने त्वक्संयुक्तसमवेतस्पार्शनवत्समवायः । तस्य च कार्यतावच्छेदकं स्पार्शनवत्समवेतस्पार्शनत्वमेव । तथा च वायोरतीन्द्रियतामतेऽपि न तदीयस्पर्शस्पार्शने व्यभिचारः । तस्य स्पार्शनवत्समवेतविरहादिति स्पर्शान्यत्वानिवेशं विनैवोपपत्तिरिति चेत्—

---

परस्परं विभागहेतुर्न भवति । यः संयोगः शब्दनिमित्तकारणं न भवति वा । यः संयोगः शब्दानिमित्तकारणं भवति यज्जनितं कर्म संयोगिनोः परस्परविभागहेतुश्च भवति स संयोगविशेषोऽभिघात इत्युपस्कारे ( ५-२-१ ) शङ्करमिश्राः ।

एवमपि वायुः स्पर्शस्पार्शनानुरोधेन त्वक्संयुक्तसमवायस्य हेतुत्वान्तरकल्पनाधिक्यनिबन्धनगौरवं दुष्परिहरमेव ।

अथ व्यासज्यवृत्तिगुणस्य यत्किंचिदेकाश्रयमात्रसन्निकर्षात्स्पार्शनवारणाय सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकस्य त्वक्संयोगाभावाभावस्य गुणस्पार्शनत्वावच्छिन्नं प्रति हेतुता वाच्या । इत्थं च वायुस्पर्शस्पार्शनस्य त्वक्संयुक्तसमवेतस्पार्शनवत्समवायजन्यतावच्छेदकानाक्रान्तत्वेऽपि न तदनुरोधेन संयुक्तसमवायस्याधिककारणता कल्प्यते । तादृशप्रतिबन्धकाभावरूपकारणविरहादेव सन्निकर्षविरहदशायां प्रत्यक्षासंभवात् । न चैवं गुणप्रत्यक्षे सन्निकर्षहेतुत्वमेव विलीनमिति वाच्यं, जातिप्रत्यक्षानुरोधेनोक्तधर्मावच्छिन्नं प्रति सन्निकर्षहेतुताया आवश्यकत्वेन गुणप्रत्यक्षस्यापि तदाक्रान्ततया सन्निकर्षजन्यत्वाक्षतेः । न च जातिस्पार्शनत्वादिकमेव संयुक्तसमवेतसमवायजन्यतावच्छेदकमस्त्विति वाच्यं, कर्मप्रत्यक्षासंग्रहाज्जातित्वस्य नित्यानेकसमवेतत्वात्मकस्य स्पार्शनादिमत्समवेतत्वापेक्षया गुरुत्वाच्च । एतेन विजातीयसत्स्पार्शनत्वादेरुक्तप्रतिबन्धकाभावजन्यतावच्छेदकत्वोपगमे सन्निकर्षजन्यतावच्छेदकस्य कर्मप्रत्यक्षासाधारण्येऽपि क्षतिविरहात् जातिप्रत्यक्षत्वस्यापि सन्निकर्षजन्यतावच्छेदकत्वं संभवतीत्यपि निरस्तमिति चेत्—

एवं सति व्यासज्यवृत्तिगुणस्य यत्किंचिदेकाश्रयमात्रसन्निकर्षदशायां तद्वृत्तिद्वित्वत्वादिजातिप्रत्यक्षवारणाय गुणवृत्तिजातिप्रत्यक्षे उक्तप्रतिबन्धकाभावस्यैव सामानाधिकरण्यसम्बन्धेन हेतुत्वमावश्यकम् । तस्य च कर्मवृत्तिजातिप्रत्यक्षसाधारणविजातीयसत्समवेतस्पार्शनत्वादिकमेव कार्यतावच्छेदकं वाच्यम् । तथा च संयुक्तसमवेतसमवायहेतुत्वमेवानर्थकम् । द्रव्यसमवेतजातिप्रत्य-

क्षानुरोधेन संयुक्तसमवायहेतुताया एव लाघवेनोचितत्वात्तस्य च कार्यतावच्छेदकम् । यदि स्पार्शनवत्समवेतस्पार्शनत्वादिकं तदा स्पर्शत्वादिस्पार्शनादौ व्यभिचार इति समवायिनि द्रव्यत्वनिवेशनमावश्यकम् । तथा च स्पार्शनवत्वादेः तत्र निवेशनमफलमेव । एवं च त्वक्संयुक्तस्पार्शनवत्समवायहेतुतायां स्पर्शस्पार्शने व्यभिचारो दुरुद्धरः । तद्वारणाय समवेतांशे स्पर्शान्यत्वस्य समवायिनि स्पार्शनवत्वस्यैव वा निवेशोऽवच्छेदकगौरवं दुर्वारमेव । वायोरतीन्द्रियतामते द्रव्यसमवेतत्वस्पर्शान्यत्वयोर्द्रव्यत्वस्पार्शनवत्वयोर्मिथो विशेष्यविशेषणभावे विनिगमकाभावात्करणताबाहुल्यं चेत्याहुः—

तदसत् । लाघवेन जातिप्रत्यक्षे प्रतियोग्यव्यवहितप्राक्क्षणविशिष्टस्वाश्रयप्रत्यक्षप्रागभावस्यैव हेतुताकल्पनेनाश्रयग्रहप्रतिबन्धकदोषादिसमवधानदशायां जातिप्रत्यक्षवारणाय तादृशहेतुत्वस्यावश्यकतया च संयुक्तसमवायहेतुत्वस्यैवाभावेनोक्तगौरवासंभवात् । तादृशप्रागभावस्य च कार्यतावच्छेदकं न समवेतप्रत्यक्षत्वं, महत्समवेतप्रत्यक्षत्वं वा । आद्ये त्रुटिप्रत्यक्षे व्यभिचारात् । द्वितीये गुणकर्मगतजातिप्रत्यक्षासंग्रहात् । उभयत्र शब्दरसगन्धप्रत्यक्षे व्यभिचाराच्च ।

एतेन त्रुटौ विश्रांतिमते(१) प्रथमपक्षस्य साधुतेत्यपि निरस्तम् ।

अपि तु सद्भिन्नसमवेतप्रत्यक्षत्वमेवेति तादृशहेतोरपि न वायुस्पर्शस्पार्शने व्यभिचार इति न तादृशहेतुजन्यतावच्छेदके

(१) त्रुटावेवावयवधाराविश्रामः । अर्थात् त्रुटिरेव परमाणुरिति नव्याः मीमांसकाश्च ( न्यायकोशे पृ० ३१३ ) । विश्वनाथवृत्तौ च पृ० २८२ काशीस्थसंस्करणे ।

स्पर्शान्यत्वादिनिवेशप्रयुक्तमपि वायोरतीन्द्रियतापक्षे गौरवमित्यलं विस्तरेण ।

तदयं निर्गलितार्थः——द्रव्यचाक्षुषस्पार्शनयोः चक्षुस्त्वक्संयोगौ हेतू । तथाऽऽत्ममानसतत्समवेतमानसयोर्म्मनःसंयोगतत्संयुक्तसमवायौ चक्षुस्त्वचोस्तु संयुक्तसमवायौ न हेतू । द्रव्यान्यसच्चाक्षुषस्पार्शनयोः सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकचक्षुःसंयोगाभावाभावत्वक्संयोगाभावाभावौ विशेषणतया हेतू । संयुक्तसमवेतसमवायश्च न क्वापि हेतुः । सन्निकृष्टसमवेतप्रत्यक्षे प्रतियोग्यव्यवहितप्राक्क्षणविशिष्टस्वाश्रयप्रत्यक्षप्रागभावः स्वप्रतियोगिप्रत्यक्षविषयसमवेतत्वसम्बन्धेन हेतुः । घ्राणरसनयोस्तु संयुक्तसमवाय एव हेतुः, न तु संयोगः, तयोर्द्रव्याग्राहकत्वात् । नापि संयुक्तसमवेतसमवायः, उपदर्शितप्रागभावहेतुतयैवासन्निकृष्टगन्धरसवृत्तिजातिप्रत्यक्षवारणसंभवात् । घ्राणसंयुक्तसमवायस्य गन्धविषयकघ्राणजत्वं रसनसंयुक्तसमवायस्य रसरासनत्वजन्यतावच्छेदकमेव । शब्दप्रत्यक्षे श्रोत्रसमवायो हेतुः । समवायाभावयोः प्रत्यक्षे विशेषणता हेतुरिति ।

नवीनास्तु मानसप्रत्यक्षे मनःसन्निकर्षो न हेतुर्मानाभावात् ।
नवीनानां मतम् आत्मादौ मनःसंयोगादिविलक्षणसन्निकर्षाभावदशायां जन्यज्ञानसामान्यहेतुभूतात्ममनःसंयोगविरहेणैव तद्विशेषमानसस्यापि वारणसंभवात् । अथैकेन पुंसाऽन्यात्ममात्रस्य तत्समवेतज्ञानादेरन्यात्मनि चाक्षुषादिज्ञानकाले चाक्षुषत्वादेश्च ग्रहणवारणायात्मवृत्तिविषयतासम्बन्धेन तत्पुरुषीयमानसत्वावच्छिन्नं प्रति तत्पुरुषीयमनःप्रातियोगिकविजातीयसंयोगत्वेनात्मसमवेतवृत्तिविषयतासम्बन्धेन तत्पुरुषीयमानसत्वावच्छिन्नं प्र-

ति तादृशविजातीयसंयोगवत्समवेतसमवायत्वेन गुणसमवेतवृत्ति-विषयतासम्बन्धेन तत्पुरुषीयमानसत्वावच्छिन्नं प्रति तादृशविजातीयसंयोगवत्समवेतसमवायत्वेन हेतुत्वकल्पनमावश्यकमिति चेत्—

न । उक्तरीत्या गुरुरूपेण कारणत्वकल्पनापेक्षया समवायेन तदात्ममानसे तादात्म्येन तदात्वेनात्मसमवेतवृत्तिविषयतया तदात्मीयमानसे आधेयतया तदात्मत्वेन गुणसमवेतवृत्तिविषयतया तदात्मीयमानसे आधेयतया तदात्मसमवेतत्वेन हेतुत्वस्यैवौचित्येन मनःसंयोगादिहेतुतायां मानाभावात् । एवं श्रोत्रसमवायस्य शब्दश्रावणहेतुत्वेऽपि मानाभावः । शब्दसत्वे तत्र तदाश्रयरूपश्रोत्रेन्द्रियसमवायव्यतिरेकस्यैवासंभवात् । अथ काशीस्थस्य पुंसो विप्रकृष्टदेशीयशब्दस्य प्रत्यक्षवारणाय शब्दवृत्तिविषयतया तत्तत्पुरुषीयश्रावणं प्रति तत्तत्पुरुषीयकर्णावच्छिन्नसमवायत्वेन हेतुताकल्पनमावश्यकम् । तत्कल्पने च देशान्तरावच्छिन्नशब्दसमवायस्य काशीस्थपुरुषीयकर्णानवच्छिन्नतया नोक्तापत्तिः । न च समवायस्य व्याप्यवृत्तितया कथं कर्णावच्छिन्नत्वमिति वाच्यं, एतदनुरोधेन शब्दसमवायस्याव्याप्यवृत्तित्वोपगमात् । उक्तं हि मिश्रैः–'शब्द इव समवायेऽपि कर्णावच्छिन्नत्वमिती'ति चेत्—

न । उक्तहेतुतापेक्षया शब्दवृत्तिविषयतया तत्पुरुषीयश्रावणं प्रत्यवच्छेद्यतासम्बन्धेन तत्पुरुषीयकर्णत्वेन हेतुताया एव तदापत्तिवारणायौचित्यात् । न चावच्छेद्यतासम्बन्धेन कर्णस्य कर्णावच्छिन्नशरीरगगनसंयोगादावपि सत्त्वात्तत्रापि विषयतया श्रावणापत्तिरिति वाच्यम् । भवन्मते पुरुषभेदेनानन्तसन्निकर्षकारणतायामवच्छेदकगौरवस्य कर्णावच्छिन्नत्वसमवायत्वयोर्मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताबाहुल्यस्य

च प्रसङ्गात्तदपेक्षया शाब्दत्वेनैकहेतुताकल्पनस्यैवौचित्यात्।

ननु कुत्रापि जन्यज्ञानत्वावच्छिन्नसामान्यहेतुताया असत्त्वेन कथं तया मानसप्रत्यक्षे मनःसन्निकर्षहेतुताया निराकरणमिति चेत्—

न। आत्मतन्मनोयोगादीनां जन्यज्ञानसामान्यहेतुतायाः सर्वसिद्धत्वात्। तथा हि—आत्मतन्मनोयोगशरीरत्वङ्मनोयोगा जन्यज्ञानसामान्यहेतवः। तत्रात्मा समवायिकारणं आत्ममनोयोगश्चासमवायिकारणं शरीरादिकं च निमित्तकारणम्। तत्र चात्मन आत्मत्वेन न हेतुता। जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन क्लृप्तया सामान्यसमवायिकारणतयैवोपपत्तेः। न च ज्ञानं प्रति आत्मत्वेन हेतुत्वाकल्पने घटादावपि समवायेन ज्ञानापत्तिरिति वाच्यं, घटादावात्ममनोयोगरूपासमवायिकारणविरहात्। आत्ममनोयोगस्य मनस्यपि सत्त्वात्तत्र समवायेन ज्ञानापत्तिरित्यपि विशेषसामग्रीविरहादेव न युज्यते। तथा हि—अनुमितिशाब्दबोधादौ परामर्शाकांक्षाज्ञानादीनां समवायेन हेतुत्वात्। तेन सम्बन्धेन च मनसि तेषामभावान्नानुमितिशाब्दादिसामग्री। तत्र प्रत्यक्षेऽपि च विशिष्टबुद्ध्यात्मके समवाये न विशेषणधियो हेतुत्वात्। समवायेन मनसि तस्या अभावात्तादृशप्रत्यक्षसामग्र्यपि न तत्रास्ति। निर्विकल्पकं प्रति च समवायेन कस्य चिदपि आत्ममात्रसमवेतस्याहेतुत्वेऽपि चाक्षुषादिकं प्रति चक्षुर्मनोयोगादेः स्वजनकादृष्टवत्त्वरूपात्ममात्रनिष्ठप्रत्यासत्त्या हेतुत्वान्मनसि तदभावान्निर्विकल्पकीयविशेषसामग्र्या अप्यसम्भवः। न च सुखत्वादिनिर्विकल्पके मानसे आत्ममात्रप्रत्यासन्नविशेषसामग्रीविरहात्तस्यैव मनस्यापत्तिरिति वाच्यं, मानसत्वावच्छिन्नं प्रति मनस्त्वेन करणत्वात्तस्य चात्मनि

ष्ठसंयोगात्मकप्रत्यासत्त्यैव हेतुत्वोपगमात् । स्वस्मिन्संयोगेन मनसोऽसत्त्वादेव तादृशापत्तेरप्यनवकाशात् । अथात्ममनः-संयोगस्य मनःसंयोगत्वेनैव हेतुता । न चात्मसमवेतत्वस्यापि तत्र निवेशः । तथा सति तस्य मनःसमवेतत्वादिना सह वि-शेष्यविशेषणभावे विनिगमनाविरहेण कारणताबुद्धेरवच्छेदक-गौरवस्य चापातात् । एवं च तादृशासमवायिकारणस्य संयोगे-न मानसत्वावच्छिन्नकरणमनसश्च शरीरादावपि सत्त्वात्तत्रापि सुखत्वादिविषयकनिर्विकल्पकज्ञानस्यापात्तिरिति जन्यज्ञानसामा-न्यं प्रति आत्मत्वेन हेतुताकल्पनमावश्यकम् । न चैवमपि ए-कात्मसमवेतगुणानां अन्यात्मव्यक्तावापत्तिवारणाय तत्तद्गुण-व्यक्तित्वावच्छिन्नं प्रति जन्यत्वविशिष्टतत्तदात्मसमवेतत्वावच्छिन्नं प्रति वा तत्तद्व्यक्तित्वेनात्मनां हेतुत्वकल्पनाया आवश्यकत्वात्ता-दृशविशेषसामग्रीविरहादेव न शरीरादौ समवायेन ज्ञानापत्तिः । यदि च व्यक्तिपौर्वापर्यनिर्वाहायासमवायिकारणमनोयोगादि-व्यक्तीनां तत्तद्व्यक्तित्वेन तत्तद्व्यक्तित्वावच्छिन्नं प्रति हेतुताकल्प-नस्यावश्यकतया तत एवैकव्यक्तिसमवेतस्य व्यक्त्यन्तरेऽप्याप-त्तिवारणसम्भवादात्मनां तत्तद्व्यक्तित्वेन हेतुता नास्तीत्युच्यते तदाप्यसमवायिकारणतत्तदात्ममनोयोगादिव्यक्तिरूपविशेषसा-मग्रीविरहेण सामान्यधर्मावच्छिन्नापात्तिं वारयित्वा सामान्यकार-णताखण्डने सर्वत्रैव सामान्यकारणताविलोपप्रसंगात् । तथा सति सामान्यधर्मावच्छिन्नाभावाधिकरणत्वे विशेषसामग्र्यभा-वकूटाधिकरणत्वस्य प्रयोजकत्वकल्पने गौरवप्रसङ्गाच्चेति चेत्—

आत्ममनःसंयोगस्य विजातीयसंयोगत्वेनैव हेतुता कल्प्यते । मनःसंयोगत्वेन तथात्वे मनःसमवेतत्वसंयोगत्वयोर्विशेष्यविशे-षणभावे विनिगमनाविरहेण कारणताबुद्धेरवच्छेदकगौरवस्य च

प्रसङ्गेनात्ममनःसंयोगगतजातिविशेषस्य कारणतावच्छेदकतया कल्पयितुमुचितत्वात् । तथा च तादृशवैजात्यावच्छिन्नसंयोगस्य शरीरादावसत्वान्न तत्र समवायेन ज्ञानापत्तिः । न चात्ममनोयोगविलम्बेन ज्ञानाद्युत्पादविलम्बस्याप्रामाणिकतयाऽत्ममनोयोगस्यासमवायिकारणत्वमेव निर्युक्तिकम् । जन्यभावस्य समवायिकारणकत्वनियमस्याप्रामाणिकत्वात् । अत एव एकत्वादिकं प्रति एकत्वादेरसमवायिकारणता दीधितिकृद्भिः प्रत्याख्याता । तथा च संयोगसम्बन्धेन करणीभूतमनसः शरीरादावपि सत्त्वात्तत्रोक्तज्ञानापत्तिवारणाय जन्यज्ञानत्वावच्छिन्नं प्रति आत्मत्वेन हेतुत्वमावश्यकमिति वाच्यं, तादृशनियममुल्लंघ्यात्ममनोयोगस्य कारणतानभ्युपगमेऽपि विजातीयसंयोगेनैव मनसः करणत्वोपगमात्तादृशसंयोगेन तस्य शरीरादावसत्तयाप्रसम्भवात् । अथैवमिच्छाद्वेषौ प्रति ज्ञानस्य, प्रवृत्तिनिवृत्ती प्रतीच्छाद्वेषयोः, सुखदुःखे प्रति धर्माधर्मयोः, तौ प्रति भावनाख्यसंस्कारात्मकवासनाया भावनायाः, भावनां प्रति च ज्ञानस्य समवायसम्बन्धेन हेतुताया आवश्यकत्वात्तत एव तादृशात्मविशेषगुणानामात्मन्यतिप्रसङ्गवारणासम्भवात् । क्वचिदपि तादृशस्थले आत्मत्वेन कारणतायाः प्रामाणिकत्वादात्मत्वजातिरेवाप्रामाणिकी स्यात् । न चोत्तरसंयोगं प्रति उत्तरसंयोगादिव्याप्त्यपूर्वत्वस्य दुर्वचनयात्मसंयोगत्वेनैव पूर्वदेशसंयोगस्य प्रतिबन्धकत्वकल्पनात्तदवच्छेदककोटिनिविष्टतया आत्मत्वजातिसिद्धिः । ज्ञानवत्संयोगत्वेन तथात्वेऽवच्छेदकगौरवादिति वाच्यम् । तादृशप्रतिबन्धकतावच्छेदकतया आत्मनि दिक्कालाकाशेषु वा जातिविशेषः कल्प्यत इत्यत्र विनिगमनाविरहाद्वित्रिचतुष्टयवृत्तेरेकैकस्या जातेः सिद्धिप्रसङ्गेनात्ममात्रवृत्तित्वविरहादिति चेत्—

युक्त्यन्तरविरहेण स्यादेवात्मत्वं जातिः । तावता क्षतेरभावात् ।

वस्तुतस्तु दिक्कालाकाशानामीश्वरातिरिक्तत्वे मानाभावात्(१) । उक्तयुक्त्यैवात्मत्वं जातिः सेत्स्यति । न च तथाऽप्युत्तरसंयोगं प्रति आत्मसंयोगस्य आत्मसंयोगत्वेन प्रतिबन्धकत्वकल्पनेऽवच्छेदकगौरवादात्मसमवेतत्वसंयोगत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहात्कारणताधिक्याच्च तत्संयोगनिष्ठजातिविशेष एव प्रतिबन्धकतावच्छेदकतया कल्पयितुमुचित इति वाच्यम् । मयाऽपि संयोगसम्बन्धेनात्मत्वेनैव प्रतिबन्धकत्वकल्पनया उक्तगौरवानवकाशात् । आत्ममनोयोगहेतुता तु प्रसङ्गाद्विचारितैवेति न पुनः प्रस्तूयते । शरीरातिरिक्तस्य ज्ञानावच्छेदकत्वातिप्रसङ्गवारणायावच्छेदकतासम्बन्धेन जन्यज्ञानत्वावच्छिन्नं प्रति आत्मसमवेतजन्यविशेषगुणत्वावच्छिन्नं प्रति वा शरीरत्वेन शरीरस्य तादात्म्यप्रत्यासत्त्या हेतुत्वं कल्प्यते । अत्र चानुमित्यादौ परामर्शादीनां विशिष्टबुद्धौ विशेषणधियः सामानाधिकरण्यप्रत्यासत्त्यैव समानावच्छेदकत्वप्रत्यासत्त्यापि हेतुत्वस्योपगमे निर्विकल्पकस्यावच्छेदकतया नियमार्थैवैतादृशकारणताकल्पनम् ।

शरीरत्वादिकं तु न जातिः पृथिवीत्वादिना संकरात् । नापि ज्ञानाद्यवच्छेदकत्वं तस्यैव तन्नियामकत्वे आत्माश्रयप्रसङ्गात् । अपि तु चेष्टावदन्त्यावयवित्वमेव तत् । चेष्टात्वं च प्रयत्नाधीनक्रियानिष्ठो जातिविशेषः । शरीरावयवस्य ज्ञानावच्छेदकत्वोपगमे तु ज्ञानजनकतावच्छेदककोटावन्त्यावयवित्वं न निवेशनीयम् । अत एव खण्डशरीरोत्पत्तिकालेऽपि महाशरीरावयवावच्छेदेन ज्ञानमुत्पद्यते । चेष्टावत्वं चोपलक्षणतया ज्ञान-

(१) 'दिक्कालौ नेश्वरादतिरिच्येते । श्रोत्रमपि च कर्णशष्कुलीविवरावच्छिन्न ईश्वर एवे'त्यादि पदार्थतत्त्वनिरूपणे रघुनाथशिरोमणिः ।

जनकतावच्छेदकम् । अतो ज्ञानाव्यवहितप्राक्क्षणे नियमतः शरीरे चेष्टाया असत्त्वेऽपि न क्षतिः ।

इदमत्रावधेयम्—मैत्रीयचक्षुःसंयोगादितो यदा मैत्रात्मनि चाक्षुषादिकं समवायेनोत्पद्यते तदा चैत्रशरीरे कथमवच्छेदकतया तन्नोत्पद्यते । न चावच्छेदकतासम्बन्धेन तदात्मसमवेतज्ञानं प्रति तन्मनःसंयोगस्यापि हेतुत्वान्नापत्तिः । मैत्रीयमनःसंयोगस्य चैत्रशरीरेऽसत्त्वादिति वाच्यम् । यतो मैत्रात्मसमवेतज्ञानत्वाद्यवच्छिन्नं न चैत्रशरीर आपाद्यते । अपि तु ज्ञानत्वाद्यवच्छिन्नमेव । तदुत्पत्तौ च चैत्रीयमनोयोगरूपविशेषसामग्रीसमवहितशरीरात्मकसामान्यसामग्र्या अपि नियामकत्वात्तस्याश्च तदानीं चैत्रशरीरे सत्त्वादुक्तापत्तिर्दुवारैव । तस्मात्तत्तत्पुरुषीयचक्षुर्विषयसंयोगादेर्जन्यतावच्छेदककोटौ चाक्षुषाद्यंशे तत्तदात्मसमवेतत्ववच्छरीरविशेषावच्छिन्नत्वं निवेश्य चाक्षुषाद्यवच्छेदकत्वं नियमनीयमिति शरीरहेतुत्वं निर्युक्तिकमेव । यदि च चक्षुःसंयोगादिजन्यतावच्छेदककोटौ तत्तदात्मसमवेतत्वतत्तच्छरीरावच्छिन्नत्वनिवेशे आत्मभेदेन शरीरभेदेन च तद्धेतुताबाहुल्यमिति । अविशेषितचाक्षुषत्वाद्यवच्छिन्नं प्रति अविशेषितचक्षुःसंयोगत्वादिनैव हेतुता कल्प्यते । यथा च विषयनिष्ठविषयतासमवाययोः कार्यकारणभावघटकप्रत्यासत्तित्वम् । तथात्मनिष्ठसमवायस्वजनकादृष्टसमवायित्वयोः शरीरनिष्ठावच्छेदकत्वस्वजनकादृष्टावच्छेदकत्वयोरपि तथात्वमुपेयते । अतो नातिप्रसङ्ग इत्युच्यते । तदापि शरीरहेतुत्वमकिञ्चित्करमेव । शरीरभिन्ने स्वजनकादृष्टावच्छेदकत्वसम्बन्धेन तादृशकारणविरहादेवातिप्रसंगनिरासात् । यदि च स्वजनकादृष्टावच्छेदकत्वस्य जनकताघटितत्वेनातिगुरुशरीरतया तदपेक्ष्य स्वसमवायिसंयुक्तमनःसंयोगस-

म्बन्धेनैव चक्षुःसंयोगादेर्हेतुता स्वीक्रियते तदापि शरीरस्य स्वतंत्रहेतुताकल्पनमपेक्ष्य शरीरत्वनोयोगे जातिविशेषं स्वीकृत्य तेन रूपेणैव तस्य सम्बन्धघटकता स्वीकरणीया । तादृशसंयोगस्य च शरीराभिन्नेऽसत्वान्नातिप्रसंगः । न च तादृशसंयोगस्य शरीर इव मनस्यपि सत्वात्तत्रावच्छेदकतया ज्ञानापत्तिर्दुर्वारैवेति शरीरहेतुताकल्पनमावश्यकमिति वाच्यम् । शरीरत्वात्मकोपाधिपुरस्कारेण शरीरहेतुताकल्पनमपेक्ष्य तादृशापत्तिवारणाय संयोगसम्बन्धेन मनस्त्वजात्यवच्छिन्नस्यैवावच्छेदकत्वसम्बन्धेन ज्ञानं प्रति हेतुतायाः कल्पयितुं युक्तत्वादिति कामिनीजिज्ञासाकाले कामिनीज्ञानोत्पादकसामग्र्यभावदशायामात्ममनोयोगकाले त्वङ्मनोयोगाभावकाले जन्यज्ञानत्वावच्छिन्नानुत्पादप्रयोजकतायाः कामिनीज्ञानाभावकामिनीजिज्ञासादौ स्वीकारे गौरवात् । लाघवात्तदपेक्ष्य जन्यज्ञानत्वावच्छिन्नं प्रति त्वङ्मनोयोगत्वेन हेतुतां कल्पयित्वा तदवच्छिन्नाभावस्यैव तत्र जन्यज्ञानत्वावच्छिन्नानुत्पत्तिप्रयोजकत्वं स्वीक्रियते कारणाभावस्यैव कार्यानुत्पादप्रयोजकत्वस्वीकारादिति युक्त्या जन्यज्ञानत्वावच्छिन्नं प्रति त्वङ्मनोयोगत्वेन हेतुता आयातीति ध्येयम् । तस्मान्मनोयोगस्य जन्यज्ञानसामान्ये हेतुत्वे विजातीयसंयोगेनैव मनसः करणत्वे वा सिद्धे मानसप्रत्यक्षे मनःसन्निकर्षो न हेतुः । न च प्रत्यक्षस्येन्द्रियसन्निकर्षजन्यत्वनियमेन मानसप्रत्यक्षे मनःसन्निकर्षहेतुत्वमावश्यकमिति वाच्यं, तादृशनियमे मानाभावात् ।

मनसि आक्षेपः अथैवं मनसि मानाभावः । न च जन्यभावस्य समवायिकारणकत्वनियमेन जन्यज्ञानसामान्यस्यात्ममनोयोगासमवायिकारणकतया प्रत्यक्षस्य करणजन्यत्वनियमेन

सुखादिप्रत्यक्षस्य मनःकरणकतया मनस्सिद्धिरिति वाच्यम् । तादृशनियमेऽपि मानाभावस्य सुवचत्वादिति चेत्--

न । नानेन्द्रियाणां स्वस्वविषये सम्बन्धसत्वे ज्ञानयौगपद्यापत्तिवारणाय मनसोऽभ्युपगमात् । न च तदभ्युपगमे कथं तद्वारणमिति वाच्यम् । तत्तदिन्द्रियजन्यप्रत्यक्षं प्रति तत्तदिन्द्रियमनोयोगस्य हेतुतया मनस्येकदा परस्परविप्रकृष्टदेशस्थितनानेन्द्रियसंयोगासंभवेन तद्वारणसंभवात् । न चैकदा ज्ञानयौगपद्यानंगीकारे दीर्घशष्कुलीभक्षणादौ युगपद्रूपरसादिविषयकनानाज्ञानोत्पादासंभव इति वाच्यम्, तत्रापि क्रमेणैव नानाज्ञानोत्पादोपगमात् । यौगपद्यप्रत्ययस्य च युगपच्छतपत्रपत्रभेदनप्रत्ययवद्भ्रान्तत्वात् । न चैकदा युगपज्ज्ञानजनकादृष्टाभावादेव ज्ञानयौगपद्यापत्तिवारणसंभवे तद्वारणार्थं मनोऽभ्युपगमो निरर्थक इति वाच्यं, कार्यं प्रत्यदृष्टस्य दृष्टसामग्रीसंपादकत्वेनोपयोगितया दृष्टकारणसत्वे अदृष्टाभावासंभवेन तथोक्तेरसंभवात् । अत एवै-

एकशरीरे एकमेव मनः

कस्मिन्शरीरे एकमेव मनोऽभ्युपेयते । अन्यथा एकशरीरे नानामनोऽभ्युपगमे एकदा नानामनोभिः सह नानेन्द्रियसंयोगसंभवे न यौगपद्यापत्तेर्वारणसंभवात् । अत एव

मनसोऽणुत्वविचारः

च मनसो न विभुत्वं किं त्वणुत्वमेव । अन्यथा मनसो विभुत्वांगीकारे इन्द्रियाणां स्वस्वविषयैः सह सन्निकर्षसत्वे मनसा सहाप्येकदा तत्तदिन्द्रियसन्निकर्षसंभवेनैकदा नानेन्द्रियजन्यज्ञानापत्तेर्दुर्वारत्वापत्तेः ।

भाट्टानां मते मनसो विभुत्वं, तत्खण्डनम्

यत्तु भाट्टैरुक्तं नानेन्द्रियाणां स्वस्वविषयैः सह सन्निकर्षसत्वे नानेन्द्रियजन्यज्ञानानामेकदोत्पत्तिस्वीकारे बाधकाभावेन मनसो विभुत्वे न किंचिद्बाधकम् । न च तथापि मनसो विभुत्वाभ्युपगमे सुषुप्तिकाले

त्वङ्मनोयोगविरहेण ज्ञानानुत्पत्तिरिति न संगच्छते । तदानीमपि विभुना मनसा सह विप्रकृष्टदेशस्थितायास्त्वचः संयोगसंभवादिति वाच्यम् । यतो मनसो विभुत्वे सुषुप्तिकाले त्वङ्मनोयोगविरहान्न ज्ञानोत्पत्तिरिति न ब्रूमः । अपि तु विषयेन्द्रियसान्निकर्षाणां विजातीयसंयोगत्वादिना हेतुत्वकल्पनेन तदभावादेव तत्र ज्ञानानुत्पत्तिरित्युपगमेनादोषात् । न च विषयेन्द्रियसन्निकर्षाणां विजातीयसंयोगत्वादिना हेतुत्वे मानाभाव इति वाच्यम् । घटादौ चक्षुःसंयोगसत्वे त्वक्संयोगादिसत्वे च घटादिस्पार्शनवारणाय स्पार्शनं प्रति चाक्षुषसामग्रीत्वेन प्रतिबन्धकत्वकल्पनापेक्षया विषयेन्द्रियसान्निकर्षस्य विजातीयसंयोगत्वादिना हेतुताकल्पनस्योचितत्वात् । तथा सति न तत्र स्पार्शनापत्तिः । कारणस्य फलबलकल्पनया फलाभावेन तत्र विजातीयत्वक्संयोगानभ्युपगमात् । न च तथापि ज्ञानाद्यसमवायिकारणात्ममनःसंयोगानुरोधेन सुखादिप्रत्यक्षे विजातीयसंयोगसम्बन्धेन मनसःकरणत्वानुरोधेन च मनसोऽणुत्वमावश्यकं विभुद्वयसंयोगानुपगमादिति वाच्यम् । ज्ञानादावात्ममनःसंयोगस्यासमवायिकारणतायाः सुखादिप्रत्यक्षे मनसः करणतायाः सुखादिप्रत्यक्षे मनसः करणत्वे चास्य मानाभावेनानुपगमात् । अजसंयोगाभ्युपगमेनादोषाच्चेति—

तदसत् । मनसो विभुत्वांगीकारे तत्र सर्वमूर्त्तसंयोगित्वरूपधर्मकल्पने गौरवेण मनसोऽणुत्वसिद्धेः ।

मनसःसिद्धावनुमानम् वस्तुतस्तु जन्यसुखादिप्रत्यक्षमिन्द्रियजन्यं, जन्यप्रत्यक्षत्वात्, रूपादिप्रत्यक्षवदित्यनुमानेन सुखादिप्रत्यक्षे इन्द्रियजन्यत्वासिद्धाविन्द्रियान्तरस्य तत्र जनकत्वासंभवेन मनः सिद्ध्यति । तस्य च विभुत्वे संयोगेन कारणत्वानुपपत्त्या-

ऽणुत्वं कल्प्यते । न चाजसंयोगोपगमान्निस्तारः । लाघवात्संयोगत्वावच्छेदेन संयोगस्य द्रव्यजन्यत्वावधारणात् ।

न चोक्तानुमानमप्रयोजकमिति वाच्यं, जन्यसाक्षात्कारत्वावच्छेदेनेन्द्रियजन्यत्वस्य रूपादिसाक्षात्कारे कल्पनात् । अकारणककार्योत्पादप्रसंगस्य विपक्षबाधकतर्कसत्त्वात् । न चेन्द्रियान्तरमेव तत्र जनकमस्त्विति वाच्यं, तस्य रूपाद्यविषयकसाक्षात्काराजनकत्वात् । एवं 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः ह्री धीः भीरित्येतत्सर्वं मन एवे'त्यादिश्रुतिरपि मनसि प्रमाणम् । अत्रैतत्सर्वं मन एवेत्यस्यैतत्सर्वजकं मन एवेत्यर्थः । 'आयुर्घृत'मितिवत्कार्यकारणोपचारात् । विचिकित्सादीनां ज्ञानविशेषरूपत्वात्तज्जनकत्वं मनसो नासिद्धम् ।

दीधितिकारानुमतं मनसो लक्षणम्

दीधितिकृतस्तु मनसोऽङ्गीकारेऽपि न तदतिरिक्तं किन्तु 'असमवेतं भूतमेव'(१) । तच्च प्राचीनमते परमाणुस्वरूपं नवीनमते तु त्रसरेणुस्वरूपमित्याहुः—

दीधितिकारमतखण्डनम्

तच्चिन्त्यम् । मनस्त्वादिना मनःप्रभृतिकारणतायां विनिगमनाविरहेण भूतचतुष्टयपरमाणूनां तत् त्रसरेणूनां वाऽनन्तानां कारणत्वतदवच्छेदकत्वकल्पनायां महागौरवेण मनसोऽतिरिक्तत्वस्यैव युक्तत्वात् । अधिकमन्यत्सुधीभिरूह्यम् । ग्रन्थगौरवभिया नेहोच्यत इति प्राहुरिति दिक् ।

---

(१) मनोऽपि चासमवेतं भूतम् । अदृष्टविशेषोपग्रहस्य नियामकत्वाच्चे'त्यादि पदार्थतत्वनिरूपणे दीधितिकाराः । पृ० १० पण्डितसंस्करणम् ।

नन्वधिकरणातिरिक्ताभावे समवाये च मानाभावाद्विशेषणतायाः सन्निकर्षत्वमप्रसिद्धमिति चेत्(१)—

अभावसमवाययोः स्वरूपविचारः

न। घटो नास्तीत्यादिप्रतीतीनामनन्ताधिकरणविषयकत्वकल्पने गौरवेणातिरिक्ताभावसिद्धेः। अतिरिक्ताभावानंगीकारे मोक्षस्यासाध्यतापत्तेश्च। एवं 'नित्यः सम्बन्धस्समवाय' इति समवायिकारणे तत्तदनित्यवस्तुनो नित्यस्य तत्तदाश्रये च संयोगादिसम्बन्धेन वृत्तित्वस्यासंभवे लाघवादेक एव समवायः कल्प्यते(२) स्वरूपसम्बन्धविशेषस्याननुगतत्वात्। न च तत्तत्स्वरूपस्य क्लृप्तत्वेन लाघवात्तस्यैव सम्बन्धत्वमुचितं, न त्वक्लृप्तसमवायस्येति वाच्यम्। तत्तत्स्वरूपस्य क्लृप्तत्वेऽपि तत्र सम्बन्धत्वस्याधिकरणतावच्छेदकत्वादेश्च कल्पने गौरवात्। किं च सर्वत्र स्वरूपसम्बन्धस्य सम्बन्धत्वकल्पने समवायेन, जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन, तत्तत्समवेतकार्यं प्रति तत्तद्द्रव्यव्यक्तित्वेन, तत्समवेतनाशं प्रति तन्नाशत्वेन, घटत्वाद्यवच्छिन्नं प्रति कपालत्वादिना, द्रव्यसमवेतचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयुक्तसमवायत्वादिना, चक्षुःसंयुक्तसमवेतसमवा-

---

(१) (क) सर्वत्र स्वरूपस्यैव सम्बन्धत्वोपपत्तौ समवायो न पदार्थान्तरमिति भट्टा वेदान्तिनः सांख्याश्च मन्यन्ते। तथा चाहुस्तार्किकरक्षायां वरदराजाचार्याः—

"विशेषसमवायौ द्वौ नाङ्गीचक्रुः कुमारिलाः" ( का० ५४ )

वेदान्तिनो यथा मध्वदर्शने—गुणादीनां गुण्यादिभिः ( द्रव्यादिभिः ) अभेदेन समवायाभावात्, आत्मनस्तद्धर्माणां च साक्षिविषयत्वेन मनोविषयत्वाभावात्। वर्णात्मकशब्दस्याद्रव्यत्वेनाकाशविशेषगुणत्वाभावात्—न्यायकोशे—पृ०८८२ द्वितीयं संस्करणम्।

(ख) केवलादधिकरणादेव नास्तीतिव्यवहारोपपत्तावभावो न पदार्थान्तरं किन्त्वधिकरणात्मक एवेति प्राभाकरा आहुः।

(२) समवायो नाना अनित्यश्चेति प्राभाकरा नव्याश्च।

यत्वादिना कार्यकारणभावस्थले तत्तत्स्वरूपसम्बन्धानां निवेशे महागौरवप्रसंगेन लाघवादेकस्य समवायस्य निवेशः क्रियत इति लाघवात्समवायसिद्धिः ।

अथैवं भावाभावसाधारणं समवायः कल्प्यताम् । अभावस्थलेऽपि स्वरूपसम्बन्धकल्पनामपेक्ष्य समवायकल्पने लाघवादिति चेत्—

न । तथा सति तत्समवेतनाशं प्रति स्वप्रतियोगिसमवेतत्वसम्बन्धेन तन्नाशस्य हेतुतयाऽभावस्यापि नाशापत्तेः । न च सामान्यतो नाशत्वावच्छिन्नं प्रति जन्यसत्वेन प्रतियोगिनो हेतुतया तादृशसामान्यसामग्र्यभावात्कथमभावस्य नाशापत्तिरिति वाच्यम् । तत्तन्नाशत्वावच्छिन्नं तत्तद्व्यक्तित्वेन प्रतियोगिनो हेतुत्वस्यावश्यकत्वे तादृशसामान्यकार्यकारणभावे मानाभावात् । न चैवं महाप्रलयकालीननाशत्वावच्छिन्नानुत्पादे तत्तद्व्यक्तित्वावच्छिन्नाभावकूटस्य प्रयोजकत्वे गौरवमिति वाच्यम् । अदृष्टत्वावच्छिन्नाभावस्यैव तत्प्रयोजकत्वात् ।

अत्र वदन्ति–यथा भावस्थले समवायसिद्धिस्तथाऽभावस्थलेऽपि सा दुर्वारा । उक्तापत्तिवारणाय सामान्यत उक्तकार्यकारणाभावांगीकारात् । न चैतदेव गौरवमिति वाच्यं, अभावस्थलेऽनन्तस्वरूपाणां सम्बन्धत्वकल्पनामपेक्ष्य चक्षुःसंयुक्तविशेषणता–चक्षुःसंयुक्तसमवेतविषणता–चक्षुःसंयुक्तसमवेतसमवेतविशेषणतादीनामिन्द्रियभेदेन स्वातन्त्र्येण हेतुताकल्पनमपेक्ष्य च तादृशहेतुतायामेव लाघवात् । भावाभावसाधारणसमवायांगीकारे चक्षुःसंयुक्तसमवायादिहेतुतयैवाभावस्थलेऽपि निर्वाहेण चक्षुःसंयुक्तविशेषणतादीनामहेतुत्वात् । न चैवं नित्याभावे जातित्वापत्तिर्नित्यानेकसमवेतत्वादिति वाच्यम् ।

अभावभेदस्यापि जातिलक्षणे निवेशात् । अथाभावप्रत्यक्षं प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वे प्रतियोगिज्ञानशून्यकालेऽप्यभावप्रत्यक्षापत्तिः । न चाभावप्रत्यक्षे प्रतियोगिज्ञानस्य हेतुतया तदभावान्नापत्तिरिति वाच्यं, प्रतियोगिज्ञानं विनापि चक्षुःसंयुक्तसमवायेन घटत्वादिप्रत्यक्षोत्पादेन तदभावस्याकिंचित्करत्वात् ।

मन्मते च चक्षुःसंयुक्तविशेषणतया प्रतियोगिज्ञानं विना क्वापि फलाजननेन तया फलजनने प्रतियोगिज्ञानस्य सहकारित्वसंभवेनोक्तापत्त्यभावादिति चेत्—

न । त्वन्मतेऽपि विशेषणताविशेषेण वृत्तिमत्साक्षात्कारं प्रति चक्षुःसंयुक्तविशेषणताया अभावसमवायोभयप्रत्यक्षसाधारण्येनैकहेतुतया तादृशविशेषणतया समवायप्रतियोगिज्ञानं विनापि समवायवानिति प्रत्यक्षोत्पादेन तया फलजनने प्रतियोगिज्ञानविरहस्याकिञ्चित्करतयोक्तापत्तेर्दुर्वारत्वात् । न च सम्बन्धप्रत्यक्षे सम्बन्धिज्ञानस्य हेतुतया सम्बन्धस्य सम्बन्धिन एव प्रतियोगितया तत्रापि प्रतियोगिज्ञानमस्त्येवेति वाच्यं, सम्बन्धप्रत्यक्षमात्रे सम्बन्धिज्ञानस्य हेतुत्वे निर्विकल्पके समवायभानानुपपत्त्या सांसर्गिकविषयतया सम्बन्धप्रत्यक्ष एव सम्बन्धिज्ञानस्य हेतुत्वात् । अथ वस्तुगत्या सम्बन्धप्रत्यक्षे एव सम्बन्धिज्ञानं हेतुः । न च तर्हि निर्विकल्पके समवायभानानुपपत्तिरिति वाच्यं, इष्टत्वात् । अत एव 'वैशिष्ट्यानवगाहिज्ञानं निर्विकल्पकमि'ति प्राचीनसिद्धान्तोऽपि सङ्गच्छत इति चेत्—

न । तथापि इदन्त्वादिनाऽभावप्रत्यक्षे व्यभिचारेणाभावप्रत्यक्षमात्रे प्रतियोगिज्ञानस्याहेतुत्वेन घटाभावत्वादिप्रकारकप्रत्यक्ष एव प्रतियोगिज्ञानस्य हेतुतया प्रतियोगिज्ञानं विनाऽप्यभावप्र-

त्यक्षापत्तेस्तवापि दुर्वारत्वात्। अथ तद्भिन्नवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्भेदस्य हेतुतया घटो घट इत्यादौ शाब्दबोधवारणायावश्यकतया प्रतियोगिमिश्रिताभावप्रत्यक्षस्याभावभिन्नेऽवश्यमुत्पत्त्या तत्र तद्भिन्नवृत्तिविषयतासम्बन्धेन ज्ञानोत्पत्तिनियामकतद्भेदस्याभावेऽसत्वान्न तादृशापत्तिः। न चैवं प्रतियोगिज्ञानस्य हेतुत्वमेवाभावप्रत्यक्षे न स्यादिति वाच्यं, इष्टत्वात्। न चैवमभावप्रत्यक्षे नियमेन प्रतियोगिज्ञानापेक्षा न स्यादिति वाच्यं, विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुतयाऽभावप्रत्यक्षस्य नियमतो विशिष्टवैशिष्ट्यविषयताशालित्वेन तदपेक्षोपपत्तेरिति चेत्—

न। ममाप्येवं सुवचतया तादृशापत्तिविरहात्। एतेन समवायातीन्द्रियतामते(१)समवायप्रत्यक्षं नास्त्येव। तदैन्द्रियकतामतेऽपि विना समवायप्रतियोगिज्ञानं घटादौ घटत्वादिसमवाये प्रत्यक्षमनुभवविरुद्धम्। एवं च चक्षुःसंयुक्तविशेषणतया प्रतियोगिज्ञानं विना समवायप्रत्यक्षाजननेन प्रतियोगिज्ञानस्य सहकारित्वसम्भवेन प्रतियोगिज्ञानशून्यकालेनाभावप्रत्यक्षापत्तिः। समवायस्याभावव्यावृत्तत्वमते तत्साधारण्यमते तूक्तरीत्या तदापत्तिर्दुर्वारेति न तत्साधारण्यमते सम्यगित्यपि परास्तम्। उक्तरीत्या तत्साधारण्यमतेऽप्युक्तापत्तिविरहादिति।

(१) वैशेषिकाः समवायमतीन्द्रियं मन्यन्ते। तथा हि—

समवायो नानाऽनित्यश्चेति प्राभाकराः—तच्चानुपपन्नम्। रूपं नष्टमिति हि प्रत्ययो न तु रूपसमवायो नष्ट इति कस्यापि प्रत्ययः। प्रत्यक्षः समवाय इति नैयायिकाः—तदप्यनुपपन्नम्। अतः समवायोऽतीन्द्रियः, आत्मान्यत्वे सत्यसमवेतभावत्वान्मनोवत् कालादिवद्वेति (वैशेषिकाः)—उपस्कार ७-२-२८.

ननु समवायस्यैक्यमते(१) वायूरूपवानिति प्रतीत्यापत्तिः,

समवायस्यैकत्वे वायौ रूपसमवायसत्वात् । न च तत्र समवाय-

आपत्तिः । सत्वेऽपि रूपाभावान्न तादृशप्रतीतिरिति वाच्यं,

सम्बन्धसत्वे सम्बन्धिनोऽसत्वस्यासम्भवादिति चेत्--

अत्र केचित्-घटत्वादिधर्मसत्वेऽपि घटपटादिधर्मिणोऽसत्ववत्सम्बन्धे सत्वेऽपि सम्बन्धिनोऽसत्वं नासम्भवीति तत्र समवायसत्वेऽपि रूपाभावान्नोक्तप्रतीतिरित्याहुः ।

तत्र समवायसत्वेऽपि तस्य वाय्वनुयोगिकत्वावच्छेदेन रूपप्रतियोगिकत्वानङ्गीकारान्न तादृशप्रतीतिरित्यन्ये ।

वायौ रूपसमवायसत्वेऽपि तस्य वायौ न सम्बन्धत्वं किन्तु पृथिव्याद्यवच्छेदेनैव सम्बन्धत्वस्याप्यनुचितया यत्र विशिष्टबुद्धिस्तत्रैवं सम्बन्धतास्वीकारादित्याहुः ।

अपरे तु वायूरूपवानिति प्रतीतिर्न समवायमात्रविषयिणी

---

(१)(क)न च रूपसमवायसत्वे तेन सम्बन्धेन तत्र कथं रूपाभावः, सम्बन्धसत्वस्य तेन सम्बन्धेन सम्बन्धिसत्वव्याप्यत्वादिति वाच्यं, रूपनिरूपितत्वविशिष्टसमवायस्यैव रूपसम्बन्धतया वायौ तदभावात् । न च विशिष्टस्यानतिरिक्तत्वेन विशिष्टसमवायोऽपि वायावस्तीति वाच्यं, रूपनिरूपितत्वविशिष्टसमवायनिरूपिताधिकरणताया एव रूपसम्बन्धात्,तस्य वायावभावात् । पृथिव्यां गन्धस्य समवायो न जले इत्यादिप्रतीतेः समवायस्य नानात्वमिति नव्याः—इति न्यायमुक्तावलीटीकायां महादेवभट्टाः ( पृ. ३२ म० म० विन्ध्येश्वरीप्रसादसंस्करणम् )

(ख) सत्यपि द्रव्यत्वे महत्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः । महतो द्रव्यस्य वायोरस्त्यनेकं द्रव्यं रूपसंस्काराभावात्तु न तस्योपलब्धिरिति । आचार्यप्रवृत्तिर्ज्ञापयति वायोः खलु रूपमस्ति संस्कारस्तु तस्य नास्तीति चन्द्रकान्ततर्कालङ्काराः—वैशेषिकसूत्रभाष्ये (४-१-६)

किन्तु समवायसम्बन्धावच्छिन्नातिरिक्ताधिकरणताविषयिणी। एवं च वायौ रूपसमवायसत्त्वेऽपि तादृशाधिकरणताविरहान्न तादृशी प्रतीतिरित्याहुः।

नवीनास्तु समवायो नैकः किन्तु नाना। एवं च वायौ स्पर्शादिसमवायसत्त्वेऽपि रूपसमवायाभावान्न तादृशी प्रतीतिः। न चैवमुक्तलाघवासंभवेनोक्तरीत्या समवायसिद्धिर्न संभवतीति वाच्यम्। उक्तरीत्या तदसिद्धावपि कपाले घटसमवायस्तन्तौ पटसमवाय इत्यादि प्रत्यक्षेणैव तत्सिद्धेः। अनन्तस्वरूपाणां सम्बन्धत्वाकल्पनेन लाघवसम्भवाच्च। न च सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वाद्घटत्वादिसमवायस्य प्रत्यक्षं न संभवतीति वाच्यं, संयोगप्रत्यक्ष एव यावदाश्रयप्रत्यक्षस्य हेतुत्वाङ्गीकारेण यावदाश्रयप्रत्यक्षं विनापि समवायसम्बन्धप्रत्यक्षे बाधकाभावादिति प्राहुरिति दिक्।

अत्र के चित् रूपवान् घट इत्यादिसम्बन्धविषयकप्रत्यक्षस्याधारतारूपसम्बन्धविषयत्वेन तादृशसम्बन्धासिद्धौ तेनैव समवायकार्य्यनिर्वाहे समवाये मानाभावः। न च समवाय एव तादृशप्रत्यक्षविषय इति वाच्यं, घटादिरेवाधारः रूपादिकमेवाधेयमिति नियमानुरोधेन समवायातिरिक्तस्य तस्यावश्यकत्वात्। अन्यथा तस्य समवायरूपत्वे तस्य द्विष्ठतया रूपे घट इत्यादिप्रतीत्यापत्तेः। विशिष्टसत्तासमवायस्य गुणे सत्वेन गुणो गुणान्यत्वविशिष्टसत्तावानिति प्रतीत्यापत्तेश्च। घटे रूपाधिकरणतासत्त्वात् घटे रूपं नास्तीति प्रतीत्यभाववद्रूपे घटो नास्तीत्यादिप्रतीते—रप्यभावप्रसंगाच्च। अत एव रूपवान् घट इत्यादिप्रतीतीनां नानास्वरूपसम्बन्धाविषयकत्वे गौरवादेकस्य समवायस्य सिद्धिरि-

स्यपि निरस्तम् । आधारतयैकयैव निर्वाहे समवायानर्थक्यात् । न चाधारस्वरूपाननुगताधारतयानुगतसमवायस्य कथं निराकरणमिति वाच्यं, तस्या अतिरिक्ताया अनुगतत्वात् । अन्यथा गुणादावपि गुणाद्यन्यत्वविशिष्टसत्ताधारतापत्तेः ।

यत्तु तन्तुषु पटः समवेतः पटे रूपं समवेतमित्यादिप्रत्यक्षमेव समवाये मानमित्युक्तम्—

तदपि न । नित्यसम्बन्धत्वादिरूपसमवायत्वस्य प्रत्यक्षाविषयत्वेन तदनुरोधेन समवायसिद्ध्यसंभवात् । सम्बन्धविषयकप्रतीतेराधारत्वेनैव निर्वाहात् । समवायशब्दप्रयोगमात्रस्य 'धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सव'(१) इति वन्मिलितार्थत्वेनोपपत्तेरित्याहुः—

अत्रोच्यते—घटो रूपवानित्यादिप्रतीतयः आधारतान्यसम्बन्धगोचराः, विशिष्टप्रतीतित्वात् , दण्डी पुरुषः कुण्डे बदरमित्यादिप्रतीतिवदित्यनुमानमेव समवाये प्रमाणम् । न चाप्रयोजकत्वम् । एवं हि मृत्पिण्डे पटो नास्तीतिवत्तन्तौ पटो नास्तीति बुद्धेर्वारणाय पटाभाववत्ताबुद्धिं प्रति आधारतासम्बन्धेन पटवत्ताबुद्धेः प्रतिबन्धकत्वं वाच्यमिति तन्तौ संयोगेनापि पटाभावबुद्धिर्न स्यात् । अथ संयोगसम्बन्धावच्छिन्नप्रतियोगिताकपटाभाववत्ताबुद्धिं प्रति संयोगेन पटवत्ताबुद्धिः प्रतिबन्धिका संयोगान्यसम्बन्धावच्छिन्नप्रतियोगिताकतदभावबुद्धौ चाधारतासम्बन्धेन पटवत्ताबुद्धिः प्रतिबन्धिकेति चेत्—

न । तथा सति पटवद्भूतलमित्याधारतासंसर्गकज्ञानानन्तरं तन्तुष्विव भूतले समवायेन पटो नास्तीति बुद्धिर्न स्यात् । तस्मात्संयोगेन पटाभाववत्ताज्ञाने संयोगेन पटवत्ताज्ञानं समवा-

(१) श्रीमद्भगवद्गीता-१-१ ।

येन पटाभाववत्ताज्ञाने समवायेन पटवत्ताज्ञानं प्रति प्रतिबन्धकं वाच्यमिति प्रतिबध्यप्रतिबन्धकभावानुरोधेन संयोग इव समवायोऽप्यतिरिक्त आवश्यकः ।

न च समवायस्थानाभिषिक्त आधारताविशेष एवास्त्विति वाच्यं, अस्माभिस्संयुक्तसमवाय्यधिकरणयोः पदार्थान्तररूपाया आधारताया अप्येकत्वाभ्युपगमात् । तस्यामवान्तरवैलक्षण्यकल्पने च समवायो नास्त्येव कलहपर्यवसानात् ।

वस्तुतस्तु तन्तुनाशात्तद्गतरूपादिनाशानुरोधेन कालिकविशेषणतासम्बन्धेन तन्तुनाशवत् तन्तुसमवेतनाशत्वावच्छिन्नं प्रति तन्तुनाशस्य स्वप्रतियोगिसमवेतत्वसम्बन्धेन कारणता वाच्या । तद्घटकतयाऽतिरिक्तसमवायसिद्धिरावश्यकी । अन्यथा समवायस्थाने आधाराधेयभावनिवेशे तन्तुनाशात्तद्गतपटरूपादिकर्मणां नाशवत्संयुक्तघटादिनाशापत्तेर्दुर्वारत्वात् । शेषं दर्शितदिशाऽवसेयमिति दिक् ।

भट्टमते समवायविचारः ।

अत्र भट्टाः–अत्र घटः अयं घटः घटे नीलं नीलो घट इत्यादिप्रतीत्या जातिगुणादीनां व्यक्तेश्च भेदाभेदसिद्ध्या भेदसहिष्णवभेदरूपं तादात्म्यं सिद्धम् । तथा च तेनैव समवायकार्यनिर्वाहे उक्तदोषाभावे चातिरिक्तसमवाये प्रमाणाभाव इत्याहुः ।

नैयायिकमते समवायविचारः ।

अत्र नैयायिकाः—भेदाभेदयोः परस्परविरहरूपतया विरुद्धत्वेन गुणगुण्यादेस्तदसम्भवेन तादात्म्यासम्भवः । न च पाकरक्ते प्राक् श्यामेऽपि पाकोत्तरमिदानीमयं न श्यामः, प्राक् न रक्तः, वृक्षो मूले न कपिसंयोगी किंत्वग्रे इति प्रतीतेर्भेदाभेदयोर्न विरोध इति वाच्यम् । अव्याप्यवृत्तीनां तेषामेकावच्छेदेन विरोधानपायात् । अत एव

कालदेशाद्यवच्छेदेनैव तत्र भेदसत्ताप्रतीतिरिति तत्र घटोऽयं न श्यामः, वृक्षो न कपिसंयोगिति न प्रतीतिः, किंत्विदानीमयं न श्यामः, मूले नायं कपिसंयोगीत्येवानुभवः । न ह्यत्र तथा । नीलो घटः, घटस्य नीलमित्यादिभेदप्रतीतिसमकालिकाभेदप्रतीतावच्छेदकाभावात् ।

प्रसङ्गात् भेदाभेदविचारः

किञ्च भेदाभेदवादे नीलो घट इतिवन्न नीलो घट इति । पाकान्नीलनाशे घटो नष्ट इत्यादिप्रतीत्यापत्तेः । एवं घटवद्रूपस्य त्वग्ग्राह्यताया रूपवद्घटादेस्त्वगग्राह्यतायाश्चापत्तिर्दुर्वारा । न चात्यन्तभेदे घटः पट इत्यादेरत्यन्ताभेदे घटो घट इत्यादेश्च सामानाधिकरण्यस्यादर्शनात् भेदाभेदस्वीकार इति वाच्यम् । घटो नीलिमा घटो नीलं रूपमित्याद्यननुभवात् । घटो न रूपं रूपं न घट इत्याद्यनुभवाच्च । तस्माद्गुणगुण्यादेर्भेद एव युक्तः । न चैवं नीलो घट इत्यस्य कथमुपपत्तिरिति वाच्यम् । अभेदोपचारेण गुणवचनेभ्यो मतुपो लुगिष्ट इत्यनुशासनसिद्धया नीलपदस्य नीलरूपवति निरूढलक्षणया वोपपत्तेः । युज्यते चैतत् । अन्यथा विशिष्टाभेदस्थले विशेषणाभेदे दण्डपुरुषादीनामपि पुरुषे दण्डः दण्डी पुरुष इत्यादि प्रतीत्या भेदाभेदस्वीकारे दण्डी पुरुष इत्यादिवन्नीली घट इत्याद्यापत्तेरित्याहुः ।

भट्टानुयायिनो नव्याः भेदाभेदविचारे

अत्र भट्टानुयायिनो नव्याः—यथा भेदाभेदविरोधाङ्गीकारेऽपि घटपटादेर्भेदा निरवच्छिन्ना एव विरोधिनः, संयोगिश्यामरक्तभेदाश्च घटादौ सावच्छिन्ना एव विरोधिन इति प्रतीतिबलात्कल्प्यते, तथा नीलो घट इत्याद्यभेदप्रतीतौ सत्यामेव घटे नीलमित्यादिभेद-

प्रतीतेरयं भेदोऽभेदाविरुद्ध एवेति कल्प्यते। न चाभेदो भेदाभावः। स च प्रतियोगितावच्छेदकरूप एवेति। तस्य व्याप्यवृत्तित्वे निरवच्छिन्नस्यैव विरोधिता। अव्याप्यवृत्तित्वे च सावच्छिन्ना। अत्र च नीलभेदाभावो नीलत्वं घटभेदाभावो घटत्वं तयोः परस्परभेदाविरोधे घटो रूपं नीलिमेत्याद्यापत्तिरिति वाच्यम्। घटे रूपनीलिमाद्यभेदप्रत्ययापादने नीलो घट इत्यादिप्रतीतेरुदयेनेष्टापत्तेः। तादृशशब्दप्रयोगापादनस्य च तवापि लक्षणया नीलो घट इत्यादिवत् दुर्वारत्वात्।

वस्तुतस्तु घटो नीलिमा घटो रूपमितिशब्दप्रयोगो घटः कलशः नीलं रूपमितिशब्दप्रयोगवत् रूपात्यन्ताभेदमेव बोधयतीति। तदभावान्न युज्यते। घटो न रूपं नीलिमावेति प्रतीत्याभेदस्याप्युपगमात्। नीलो घट इति शब्दप्रयोगस्तु भेदाभेदरूपं तादात्म्यं बोधयतीत्यत्र शब्दस्वभाव एव शरणम्। न च रूपस्य घटात्यन्ताभेदोऽपि स्यादेव घटात्यन्ताभिन्नघटाभिन्नत्वादिति वाच्यं, विलक्षणघटसामग्रीजन्यत्वस्यैव घटात्यन्ताभेदे प्रयोजकत्वात्। अन्यथा रूपाश्रयसमवेतत्वेन घटैकत्वस्यापि रूपत्वापत्तेः। अत एव पाकाद्रूपनाशेऽपि न घटनाशः। पाकस्य घटनाशाहेतुत्वात्। अन्यथा वह्निसंयुक्तसमवायाविशेषेण तवापि पाकाद्रूपनाशे घटगतसंख्यापरिमाणादेर्घटस्य च नाशापत्तेर्दुरुद्धरत्वात्। रूपस्य घटाभिन्नत्वेन त्वगिन्द्रियग्राह्यत्वेऽपि रूपत्वादेस्तदग्राह्यत्वान्न नीलो घट इति त्वाच्प्रत्यक्षं त्वगिन्द्रिययोग्यस्यैव त्वचा ग्रहणात्। न च रूपत्वादेस्त्वगिन्द्रिययोग्यत्वमपि स्यादिति वाच्यं, ब्राह्मणत्वादेः प्रतिनियतविशुद्धमातापितृजन्यत्वादिरूपव्यञ्जकव्यंग्यत्ववत्तेषामपि प्रतिनियतचक्षुरादीन्द्रियव्यंग्यत्वोपगमात्। अन्यथा योग्यव्यक्तिवृत्तिधर्मत्वेनैव योग्यत्वे

गन्धादेश्चाक्षुषत्वस्य गुरुत्वस्थितिस्थापकादेः(१) प्रत्यक्षत्वस्याप्यापत्तेः । तस्मादनुभवानुसारेण कस्य चिदिन्द्रियस्य किंचिद्योग्यं किंचिच्चायोग्यमितिकल्पनमावश्यकम् । अत एव परिमाणस्य तद्गतमहत्वावान्तरजातीनां वा ग्रहे दूरत्वदोषस्य प्रतिबन्धकत्वं तदभावस्य कारणत्वं चतुष्टयसान्निकर्षस्य(२)वा हेतुत्वं न तु गुणान्तरस्य ग्रहेपीति सर्वसिद्धमुपपद्यते । एवं च गुणगुण्यादेर्भेदाभेदौ युक्तावेव । तावेव च तादात्म्यम् । तेनैवोपपत्तौ न पृथक् समवायः कल्प्यो गौरवात् मानाभावात् । तत्कार्यस्य तादात्म्येनैवोपपत्तेरिति वदन्ति ।

अथ कः पुनरयं समवाय इति चेत्—

समवायलक्षणं न्यायवैशेषिकमते

अत्राहुः—अयुतसिद्धयोराधाराधेयभावानियामकः सम्बन्धः समवायः(३) । अयुतसिद्धत्वं च विशेषणतासाक्षात्सम्बन्धेन स्वाश्रयाश्रयिभावव्याप्यस्वोभयकालकत्वम् । तन्तुपटादीनां यो यः कालस्तदा तेषामाश्रयाश्रयिभावनियमेन तदुभयकालस्य तद्व्याप्यत्वमस्तीति लक्षणसमन्वयः।

नन्वेवं तुरीपटादीनामिति न तत्रातिप्रसंगः । पटोत्पत्तिपूर्वं तन्तुसत्वात्तदानीमाश्रयाश्रयिभावासत्वेनासंभवत्वारणायोभयेति, चक्रघटयोरुभयोर्यो यः कालस्तदा यत्किंचिदाश्रयाश्रयिभावसत्वादतिप्रसंगवारणाय स्वेत्युक्तम् । वायुरूपाभावादीनामयुतसिद्धत्ववारणाय विशेषणतान्यसम्बन्धेनेति । अत ए·

(१) अन्यथाकृतस्य पुनस्तदवस्थापादकः संस्कारविशेषः ।

(२) चतुष्टयसन्निकर्षो यथा–इन्द्रियावयवैः अर्थावयविनां, इन्द्रियावयविना अर्थावयवानां; इन्द्रियावयवैः अर्थावयवानां; इन्द्रियावयविना अर्थावयविनां सन्निकर्ष इति ।

(३) परस्परोपसंश्लेषो भिन्नानां यत्कृतो भवेत् ।
समवायः स विज्ञेयः स्वातन्त्र्यप्रतिरोधकः–इति प्राचीना कारिका ॥

नेदानीं पट इह पट इत्यादिप्रतीत्या कालदिशोर्यावत्पटादिसत्त्वमाश्रयाश्रयिभावसत्त्वात्पटादेः कालदिशोरयुतसिद्धत्वापत्तिरित्यपि निरस्तम् । तेषां कालिकदैशिकविशेषणताया एव सम्बन्धत्वेन विशेषणतान्यसम्बन्धेनाश्रयाश्रयिभावविरहात् । घटोत्पत्तिपूर्वमारभ्य तन्नाशपर्यन्तं चक्रसंयुक्तकपाले जातघटस्य यावत्सत्त्वं चक्रेण स्वसंयुक्तकपालसमवेतत्वरूपपरंपरासम्बन्धेनाश्रयाश्रयिभावसत्त्वादतिप्रसंगवारणाय साक्षात्सम्बन्धेनेति । न चैवमपि चक्र एवोत्पन्नविनष्टघटस्य चक्रेण सह भाण्ड एव नवीनोत्पन्नविनष्टखण्डजलस्य भांडेन सह भूतल एवोत्पन्नविनष्टखण्डपटस्य भूतलेन सहायुतसिद्धत्वापत्तिः । विशेषणतान्यसाक्षात्सम्बन्धेन संयोगेनाश्रयाश्रयिभावसत्त्वादिति वाच्यम् । घटाद्युत्पत्तिसमये तत्संयोगाभावेन तदा तेन सम्बन्धेनाश्रयाश्रयिभावविरहेणादोषात् । प्रांचस्तु—

तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः ।
अनश्यदेकमपराश्रितमेवावतिष्ठते । (१)

तथा चावयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेत्येतावेवायुतसिद्धाविति फलितम् । तल्लक्षणं च–ययोरेकं स्वनाशपूर्वक्षणपर्यन्तमपराश्रितमेव तिष्ठति तत्त्वम् । तन्तुनाशात्पटनाशस्थले नाशक्षणे पटोऽनाश्रित एवावतिष्ठत इति तदा पटो न तन्त्वाश्रित इति तत्र लक्षणगमनाय स्वनाशपूर्वक्षणपर्यन्तमित्युक्तमित्याहुः—

तच्चिन्त्यम् । जातेर्नित्यत्वेन जातिव्यक्त्योरव्याप्तेः । एवमीश्वरतज्ज्ञानयोरात्मात्मत्वयोर्नित्यद्रव्यविशेषयोरुभयोर्नित्ययोः स्वनाशाप्रसिद्धाऽव्याप्तिः । घटस्य नाशपर्यन्तं दिक्कालयोः स-

(१) कारिकेयं केशवमिश्रैस्तर्कभाषायामुद्धृताऽस्ति ।

स्वात्तयोरात्मसुखप्रागभावयोश्चातिव्याप्तिः ।

अपरे तु नित्यः सम्बन्धः समवायः । संयोगवारणाय नित्य इति । गगनादिवारणाय सम्बन्ध इति ।

नन्वाधिकरणाभावयोः स्वरूपातिरिक्तसम्बन्धानभ्युपगमेन नित्यात्मकस्वरूपसम्बन्धेऽतिव्याप्तिः । न च संयोगसमवायान्यतरत्वरूपसम्बन्धत्वस्य विवक्षणान्न दोष इति वाच्यम् । तथा सति समवायत्वघटकीभूतसम्बन्धत्वज्ञाने समवायत्वज्ञानम् । समवायत्वज्ञाने च निरुक्तान्यतरत्वरूपसम्बन्धत्वज्ञानमिति ज्ञप्तावन्योन्याश्रयापत्तेः । न च सम्बन्धिभिन्नत्वमप्याधिकं निवेशनीयमिति वाच्यं, सर्वस्यापि यत्किंचित्सम्बन्धित्वेन सम्बन्धिभिन्नत्वस्याप्रसिद्धेः । न च स्वसम्बन्धिभिन्नत्वं निवेशनीयमिति वाच्यं, समवायस्यापि स्वात्मकस्वरूपसम्बन्धसम्बन्धित्वेनासम्भवादिति चेत् —

न । नित्यपदस्य स्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकरणधर्मवत्त्वरूपतया सम्बन्धपदस्य च भावविभाजकोपाधिमत्वपरतया स्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकरणभावविभाजकोपाधिमत्वं समवायत्वमिति पर्यवसानात् ।

समवायस्यैक्येन समवायत्वस्य स्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकरणत्वेन भावविभाजकोपाधित्वेन च नाप्रसंगः । तद्व्यक्तित्वमादायातिप्रसंगवारणाय विशेष्यम् । द्रव्यत्वादिकमादाय तद्वारणाय विशेषणमिति प्राहुरिति दिक् ।

तस्मात्समवायाभावयोर्ग्रहे विशेषणतासन्निकर्ष इति सिद्धम् ।

सा च विशेषणता द्विविधा-इन्द्रियविशेषणता, तत्सम्बन्धविशेषणता च । तत्र श्रोत्रे शब्दाभावग्रहे आद्या । अन्त्या च संयोगादिपंचान्यतमसम्बन्धभेदेन

विशेषणताविभागः

भिन्ना । तत्र (१)भूतलादौ घटाद्यभावग्रहे संयुक्तविशेषणता; (२)शुक्लादिरूपे नीलत्वाद्यभावग्रहे संयुक्तसमवेतविशेषणता; (३)नीलत्वादावभावग्रहे च संयुक्तसमवेतसमवेतविशेषणता; (४)ककारादौ खत्वाद्यभावग्रहे समवेतविशेषणता; (५)खत्वादौ गत्वाद्यभावग्रहे समवेतसमवेतविशेषणतेति बोध्यम् । न च घटाभावादौ पटो नास्तीत्यादिप्रत्यक्षानुरोधेन विशेषणविशेषणताऽपि भिन्ना स्यादिति वाच्यं, अभावाधिकरणकाभावस्यातिरिक्तस्यानंगीकारात् । अभावत्वप्रकारकप्रतीतेरधिकरणेनैवोपपत्त्या तत्र तस्याधिकरणरूपत्वादिति सिद्धान्तात् ।

वस्तुतस्तु समवाये घटाद्यभावप्रत्यक्षाद्यनुरोधेन विशेषणताया अपि भिन्नत्वमावश्यकमेवेति ध्येयम् ।

अत्र प्राभाकराः—विशेषणताया अभावग्राहकत्वमसंगतम्,

अभावस्यातिरिक्तत्वविचारः प्राभाकराणां मते अभावग्राहकविशेषणतासम्बन्धविचारश्च

अभावस्याधिकरणाद्यात्मकतया तद्ग्राहकसन्निकर्षैस्संयोगादिभिरेव तद्ग्रहसंभवादिति वदन्ति । तेषां चायमाशय उन्नीयते—भूतलादिरूपाधिकरणेनैवाभावव्यवहारोपपत्तावतिरिक्ताभावे मानाभावात् । अधिकरणातिरिक्ताभावस्वरूपस्य दुर्वचत्वाच्च नातिरिक्तोऽभावः । तथा हि—न तावत्कपालाद्यधिकरणकेतिरिक्ते घटादिध्वंसे प्रमाणमस्ति । कपालाद्यतिरिक्तघटादिध्वंसस्याननुभवात् । तदुक्तं—

दृष्टस्तावदयं घटोऽत्र च पतन् दृष्टस्तथा मुद्गरो
दृष्टा खर्परसंहतिः परमितोऽभावो न दृष्टः परः ॥
तेनाभाव इति श्रुतिः क्व निहिता किं चात्र तत्कारणं
स्वाधीना कलशस्य केवलमियं दृष्टा कपालावली ॥ इति

यत्तूक्तं 'अधिकरणातिरिक्तध्वंसानंगीकारे मोक्षस्याऽसाध्यत्वापत्तिः तस्यात्यन्तिकदुःखध्वंसरूपतया तस्य चात्मरूपतया नित्यत्वेनाऽसाध्यत्वा'दिति—

अधिकरणातिरिक्ताभाव. स्वीकारे मोक्षे आपत्तिः

तत्तुच्छम् । नित्यसुखाभिव्यक्तेरेव मोक्षत्वोपगमात् । भवतु वा आत्यन्तिकदुःखध्वंसस्य मोक्षत्वं तथाऽपि न क्षतिः । मोक्षस्यात्मरूपतया नित्यत्वेऽपि मोक्षत्वावच्छिन्नाधिकरणताया एव साध्यत्वोपगमात् । नैयायिकमतेऽप्यधिकरणताया अतिरिक्तत्वात् ।

वस्तुतस्त्वात्मरूपस्य मोक्षस्यात्मत्वेनासाध्यत्वेऽपि दुःखध्वंसत्वेन साध्यत्वोपगमान्न दोषः । अत एव घटादिध्वंसस्य कपालादिरूपतया मुद्गरपातादिसामग्रीसाध्यत्वानुपपत्तिः कपालादेः सिद्धत्वादित्यपि निरस्तम् । अन्वयव्यतिरेकाभ्यां पटादेः स्वसामग्रीसाध्यत्ववदधिकरणात्मकघटादिध्वंसस्यापि ताभ्यां घटादिध्वंसत्वेन मुद्गरपातादिसामग्रीसाध्यत्वोपगमेनादोषात् । तस्माद्ध्वंसो नातिरिक्तः ।

एवं प्रागभावेऽप्यधिकरणातिरिक्ते प्रमाणाभावः । उत्पत्तेः पूर्वं कपालादौ घटो नास्तीत्यादिप्रतीतेः कपालाद्यधिकरणैरेवोपपत्तेः । इहेदानीं घटप्रागभाव इत्यादिप्रत्ययस्य च स्ववासनामात्रकल्पितत्वेन तदसाधकत्वादिहेदानीं घटो भविष्यतीत्यादिप्रत्ययस्य चोत्पत्स्यते भविष्यतीत्यनयोः समानविषयकत्वेन भविष्यत्कालीनोत्पत्तिमत्त्वविषयकत्वात् । अभावत्वं विनाशिवृत्तिपदार्थविभाजकोपाधित्वात्, भावत्ववदित्यनुमानस्य चाप्रयोजकत्वेन तदसाधकत्वात् ।

प्रागभावविचारः

अथैकस्माद्वह्निसंयोगात् रूपरसादेरुत्पत्तौ कार्यभेदार्थं प्रा-

गभावोऽङ्गीकार्यः । तत्र समवायिकारणासमवायिकारणयोरभेदेन तद्भेदस्य कार्यभेदानिर्वाहकतया प्रागभावरूपानिमित्तकारणाभेदस्यैव कार्यभेदनिर्वाहकत्वादिति चेत्—

न । तत्र वह्निसंयोगानां भेदकल्पनेन तद्रूपासमवायिकारणभेदेनैव रूपरसादिकार्यभेदनिर्वाहात् । आवश्यकं च रूपादीनां परस्परवैलक्षण्यप्रयोजकतया तद्भेदकल्पनम् । अन्यथा सलक्षणानां बहूनां घटादीनां प्रागभावभेदेऽप्यवैलक्षण्येन प्रागभावभेदस्य वैलक्षण्याप्रयोजकतया रूपादीनां परस्परवैलक्षण्यानुपपत्तेः।

वस्तुतस्तु रूपादिमति भाविरूपादिप्रागभावसत्त्वेन तदापत्तिवारणाय रूपादौ रूपत्वादिना प्रतिबन्धकतामुपेत्य रूपत्वावच्छिन्नं प्रति रूपत्वाद्यवच्छिन्नाभावस्य रूपादिनाश्यशक्तिविशेषस्य वा कारणत्वमवश्यं वाच्यमिति। तत एव रूपादीनां परस्परं वैलक्षण्यस्य भेदस्य च निर्वाहेन प्रागभावासिद्धिः ।

अथ घटत्रयादिविषयकापेक्षाबुद्ध्या द्वयोस्त्रित्वादेस्त्रिचतुरादिषु च द्वित्वस्य वारणाय प्रागभावोऽवश्यमङ्गीकार्यः । न च द्वयोरपेक्षाबुद्ध्या द्वित्वं त्रयाणां तथा त्रित्वं जन्यत इत्याद्यभ्युपगमान्निर्वाह इति वाच्यम् । द्वित्वात्रित्वाद्युत्पत्तेः प्राक् द्वयोः त्रयाणामित्यस्यैवासम्भवादिति चेत्—

न । एकत्वादिसमकालमेव द्वित्वाद्युत्पत्तेरङ्गीकारेण द्वित्वादेरपेक्षाबुद्धिव्यंग्यत्वमात्रस्याङ्गीकारात् । अन्यथा सर्वत्र व्यञ्जकानां व्यंग्यजनकत्वापत्त्या व्यंजकत्वोच्छेदापत्तेः। प्रतिपुरुषं तत्तदपेक्षाबुद्धिजन्यानन्तद्वित्वादिव्यक्तीनां कल्पने महागौरवेण द्वित्वादेरपेक्षाबुद्धिव्यंग्यतायां लाघवाच्च ।

अस्तु वा द्वित्वादेरपेक्षाबुद्धिजन्यत्वं तथापि न क्षतिः । द्वित्वादीनामुपलक्षणतया द्वित्वादिकारणतावच्छेदकत्वोपगमेन

द्वित्वे एकत्वद्वयस्य त्रित्वादौ एकत्वत्रयादेरसमवायिकारणत्वो-पगमेन द्वित्वाद्युत्पत्तिनियमनिर्वाहात् । गुणेऽपि द्वित्वादेर्बुद्धि-विशेषविषयत्वरूपस्य सर्वैरेवाङ्गीकारात् ।

यत्तु सहस्रतन्तुकपटस्य तेष्वेव तन्तुषूत्पत्तिर्नान्यत्रेति नियमनिर्वाहाय प्रागभावोऽवश्यमुपेयः । तन्तूनां तत्संयोगानां च तादात्म्येन समवायेन च तत्पटानधिकरणतन्तुष्वपि सत्त्वेन तन्तुत्वेन तन्तूनां तादात्म्येन हेतुतया विजातीयतन्तुसंयोगत्वेन तत्संयोगानां च समवायेन हेतुतया च तादृशनियमानिर्वाहात् । न च समवायेन तत्पटोत्पत्तौ सहस्रतन्तूनां तत्तत्तन्तुत्वेन तादात्म्येन तत्तत्संयोगव्यक्तीनां तत्तत्संयोगत्वेन समवायेन वा हेतुतया निर्वाह इति वाच्यं, सहस्रतन्तुकपटस्य समवायेन सहस्रतन्तुष्वेवोत्पत्त्या तत्र कस्यापि सहस्रान्तर्गततन्तोस्तादात्म्येन प्रत्येकद्विमात्रनिष्ठानां तत्संयोगानां च समवायेनासत्त्वाद्व्यभिचारापत्तेः । तस्मात्तत्पटं प्रति तत्पटप्रागभावस्य तत्प्रागभावत्वेन तत्तत्तन्तूनां वा पृथक्कारणत्वमावश्यकमिति प्रागभावसिद्धिरिति—

तदसत् । तत्पटन्ति तावत्तन्तुनिष्ठसहस्रत्वसंख्यायास्तादृशसंख्याविशिष्टतन्तुत्वेन वा कारणतयैवानतिप्रसङ्गेन तदासिद्धेः ।

एतेन समवायेनान्यतरकर्मजसंयोगविभागौ प्रति कर्मणो हेतुत्वं सर्वसिद्धम् । तत्र च कारणतावच्छेदकसम्बन्धो न समवायः। कर्मशून्येऽप्युत्तरदेशादौ संयोगाद्युत्पत्तेर्व्यभिचारात्। नापि कालिकसम्बन्धः। स्वसमानाधिकरणद्रव्यत्ववत्त्वं वा । तथा सत्येकद्रव्ये कर्मदशायां द्रव्यान्तरेऽपि तदापत्तेः । आद्ये गगनादिसंयोगे व्यभिचाराच्च । न च कर्मवद्वृत्तित्वविशिष्टसमवायेन संयोगादौ समवायेन कर्मणो हेतुत्वान्न दोष इति वाच्यं,

भान्युत्तरदेशोत्पत्तिकर्मकालीनसंयोगे व्यभिचारवारणात् । न च प्रतियोगितासम्बन्धेन संयोगं प्रति कर्मत्वेन हेतुता । प्रतियोगितात्मकविलक्षणसम्बन्धश्च कर्मवत्येव नोत्तरदेशेऽपीति न व्यभिचार इति वाच्यम् । उत्तरदेशव्यावृत्ततादृशविलक्षणसम्बन्धे मानाभावात् । यत्तु स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन कर्मविशिष्टसंयोगं प्रति कर्मणो हेतुत्वान्न दोषः । एवं च संयोगजसंयोगे व्यभिचारस्यैतावतैव वारणात् कर्मजन्यतावच्छेदकतया जातिविशेषोऽपि न कल्प्यत इति लाघवमपीति । तत्रानेकाननुगतपदार्थघटिताव्यवहितोत्तरत्वस्य सम्बन्धत्वे मानाभावात् । धूमलिङ्गकत्वादिकं विशिषयिता विशेषात्मकं निवेश्यैवानुमितिपरामर्शयोः कार्यकारणभावस्योपपादनसम्भवात् । तस्मात् स्वप्रागभावाधिकरणीभूतस्वाधिकरणक्रियाविशिष्टसमवायः कार्यतावच्छेदकसम्बन्धः । संयोगत्वं च कार्यतावच्छेदकं स्वप्रागभावाधिकरणत्वम् । स्वाधिकरणत्वं च कालिकसम्बन्धेन । तादृशसम्बन्धेन च संयोगो नोत्पद्यते । उत्तरदेश इति न व्यभिचारः । यत्र संयोगोत्पत्तिसमकालमेवोत्तरदेशे क्रियोत्पत्तिस्तत्र व्यभिचारवारणाय स्वप्रागभावाधिकरणत्वम् । क्रियाविशेषणं विनष्टक्रियामादाय व्यभिचारवारणाय स्वाधिकरणत्वं क्रियाविशेषणम् । आश्रयनाशानाश्यकर्मण उत्तरसंयोगमात्रनाश्यतया स्वजन्यसंयोगकाले क्रियासत्वस्यावश्यकतया सर्वेषामेव संयोगानां कालिकविशेषणतया स्वजनकीभूतकर्माणि वृत्तेर्न कस्य चिदप्यसंग्रहः । एवं विभागस्थलेऽप्यूह्यम् ।

वस्तुतस्तु समवायेन संयोगं प्रति स्वजन्यसंयोगप्रागभाववत्तासम्बन्धेनैव कर्मणः कारणता वाच्या । जन्यत्वं चातिरिक्तम-

खण्डोपाधिरूपं वेति नानेकपदार्थघटितस्य सम्बन्धत्वानुपपत्तिरिति प्रागभावसिद्धिर्दुर्वारेत्यपि निरस्तम् । संयोगविशेषं प्रत्यपि द्रव्यविशेषनिष्ठद्वित्वसंख्यायास्तादृशसंख्याविशिष्टद्रव्यविशेषस्य वा हेतुतयैवाव्यभिचारादनतिप्रसंगाच्च । एवं च कर्मणः कालिकसम्बन्धघटितसामानाधिकरण्यप्रत्यासत्त्यैव हेतुता वाच्येति न तत्सिद्धिः ।

केचित्तु समवायेन विजातीयसंयोगं प्रति समवायेनैव कर्मणो हेतुत्वम्। न चोक्तव्यभिचारः। वक्ष्यमाणरीत्या तदभावात्। तथा हि स्वाव्यवहितपूर्वक्षणावच्छेदेन कार्यतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्त्यधिकरणीभूतयावद्व्यक्तिवृत्तिकाभावप्रतियोगितावच्छेदकभेदकूटवत्कारणतावच्छेदकधर्मवत्त्वरूपव्यापकत्वमेव कारणताघटकम्। इत्थं च स्वाव्यवहितपूर्वक्षणावच्छेदेन तादृशयत्किंचिद्व्यक्त्यधिकरणभूतयावद्व्यक्तिषु कारणतावच्छेदकावच्छिन्नाभाववत्त्वमेव व्यभिचारः। न च तादृशव्यभिचारः प्रकृते सम्भवति । क्रियाधिकरणस्यापि तादृशयावदन्तर्गततया तत्र संयोगाव्यवहितप्राक्क्षणावच्छेदेन क्रियाभावासत्त्वात् । अथैवं द्रव्यचाक्षुषादिकं प्रति चक्षुःसंयोगादिहेतुतायां कार्यतावच्छेदककोटौ द्रव्यविषयकत्वादेः कार्यतावच्छेदकसम्बन्धीभूतविषयतायां द्रव्यवृत्तित्वादेर्वा निवेशो निरर्थकः। शुद्धविषयतादिप्रत्यासत्त्या शुद्धचाक्षुषत्वादीनां जन्यतावच्छेदकत्वेऽपि निखिलानामपि चाक्षुषव्यक्तीनामवश्यमेव द्रव्यादिविषयकतया द्रव्यादेरपि तादृशयावदन्तर्गततया तत्र च चक्षुःसंयोगादीनामवश्यं सत्त्वेनोपदर्शितव्यभिचारासम्भवादिति चेत्—इष्टमेव तदस्माकम् ।

वस्तुतस्तु कार्यतावच्छेदकादिभेदेन कारणताभेदस्यावश्यकतया तत्तत्स्थलीयकारणतायां यावदर्थव्यापकतानिवेशे गौरवा-

त्तामनिवेश्य कारणता निर्वचनीया। तत्र व्यभिचारवारणाय तन्निवेशनमावश्यकम्। अत्र चानन्यगतिकतया यावत्त्वनिवेश इत्याहुः।

अन्ये तु सामानाधिकरण्यसम्बन्धेन कर्मत्वेन कारणता। तादात्म्यसम्बन्धेन संयोगत्वेन कार्यता। एवं च कर्मशून्योत्तरदेशे न व्यभिचारस्तस्य कार्यतावच्छेदकतादात्म्यसम्बन्धेन कार्यासम्बन्धित्वादित्याहुः—

तदसत्। तादात्म्येन कार्यसम्बन्धिनि स्वस्मिन् स्वाव्यवहितपूर्वक्षणावच्छेदेन विद्यमानाभावाप्रसिद्ध्या तादात्म्यस्य कार्यतावच्छेदकसम्बन्धत्वे कारणत्वस्यैवानुपपत्तेः। अवच्छेद्याधिकरणासम्बद्धस्यावच्छेदकत्वाभावात्। न च कार्याव्यवहितपूर्वक्षणवृत्तित्वे सति कार्याधिकरणवृत्तित्वस्याभावे निवेशान्न दोष इति वाच्यं, कार्याव्यवहितपूर्वक्षणे देशान्तरावच्छेदेन कार्याधिकरणे कालान्तरावच्छेदेन कारणाभावसत्त्वेन कारणत्वस्यैवासम्भवेन तथावक्तुमशक्यत्वात्।

अथ तत्त्वज्ञानिनामदृष्टोत्पत्तिवारणायानन्तानां मिथ्याज्ञानजन्यवासनानां हेतुत्वापेक्षयाद्यतत्त्वज्ञानप्रागभावस्यैकस्य हेतुत्वकल्पने लाघवात्प्रागभावासिद्धिरावश्यकीति चेत्—

न। तथा सति घटादावप्यनन्तानां दण्डादीनां हेतुत्वापेक्षया लाघवेन दण्डादिसमनियतैकपदार्थान्तरकल्पनापत्त्या घटादौ दण्डादेरप्यहेतुत्वापत्तेः। न च दण्डत्वादिनाऽनुगतरूपाणामनन्तदण्डादीनां हेतुत्वान्न दोष इति वाच्यं, इहापि मिथ्याज्ञानजन्यतावच्छेदकजातिविशेषात्मकवासनात्वेनानुगतेनादृष्टहेतुत्वेनैवोपपत्तेः। अत एवोपदर्शितापत्तिवारणाय लाघवान्मिथ्याज्ञानजन्यवासनाध्वंस आद्यतत्त्वज्ञानध्वंसो वाऽदृष्टे प्रतिबन्धकः कल्प्यत

इति ध्वंससिद्धिर्दुर्वारेत्यपि परास्तम् । वासनात्वेन हेतुत्वे एव लाघवात् ।

वस्तुतस्तु नैयायिकानां घटस्यैव स्वप्रागभावध्वंसत्ववत् स्वध्वंसप्रागभावत्ववच्च मिथ्याज्ञानजन्यवासनानामेवाग्रतत्वज्ञानप्रागभावत्वकल्पनसम्भवेन तद्धेतुत्वेऽपि नातिरिक्तप्रागभावसिद्धिरिति ।

यत्तु प्राभाकराणां ध्वंसप्रागभावानङ्गीकारेऽभावत्वप्रतीतेः प्रमात्वानुरोधेन प्रतियोग्यतिरिक्तावेव ध्वंसप्रागभावयोः प्रागभावध्वंसाविति स्वसिद्धान्तभंगापत्तिरिति ध्वंसप्रागभावसिद्धिस्तेषामप्यावश्यकीति—

तन्न । भावसाधारणाभावत्वोपगमेनैव तदुपपत्तावतिरिक्तध्वंसप्रागभावासिद्ध्योक्तप्रतियोग्यतिरिक्ताविरादेरेकदेशिमतत्वेन स्वसिद्धान्तत्वाभावेन तद्भंगे इष्टापत्तेः । अथ प्रागभावानुपगमे सामग्रीसत्त्वेनोत्पन्नपुनरुत्पादापत्तिः । न चोत्पन्नपुनरुत्पादाप्रसिद्ध्या नापत्तिरिति वाच्यम् । एतत् घटाद्युत्पत्तिद्वितीयक्षणो यदि एतद्घटासामग्र्यव्यवहितोत्तरः स्यात्तदा एतत्पटाद्युत्पादवान्स्यादित्याकारकापत्तावप्रसिद्ध्यभावादिति चेत्—

न । समवायेन द्रव्यं प्रति समवायेन द्रव्यत्वेन प्रतिबन्धकत्वस्य सर्वसिद्धत्वेन उत्पन्नद्रव्यस्यैव प्रतिबन्धकतया तत्सत्वे पुनस्तदुत्पत्तेरसम्भवात् । अन्यथा भाविखण्डपटस्यापि प्रागभावसत्वेन महापटवत्यपि तदुत्पत्त्यापत्तेस्तवापि दुर्वारत्वात् । न च मम महापटध्वंसस्य खण्डपटहेतुत्वान्न दोष इति वाच्यम् । तथाप्युत्पत्त्यवच्छिन्नसमवायसम्बन्धेनैव चरमतन्तुसंयोगादेः पटादिहेतुतयैवोत्पन्नपुनरुत्पादवारणे प्रागभावासिद्धेः । नचैवमपि धारावाहिकबुद्धिस्थले प्रथमो-

त्पन्नस्य चतुर्थक्षणे पुनरुत्पत्तिवारणाय तद्धेतुत्वमावश्यकम्। तत्र तत्सामग्र्याः प्रथमज्ञानरूपप्रतिबन्धकाभावस्य च तत्र सत्त्वादिति वाच्यम्। तत्र तावत्काळमेकस्यैव ज्ञानस्यान्योत्पत्तौ तत्प्रतिबन्धकतायाश्च लाघवेन स्वीकारात् तस्यानतिरिक्तः प्रागभावः।

अत्यन्ताभावान्योन्याभावावप्यधिकरणस्वरूपावेव

एवमत्यन्ताभावान्योन्याभावयोरप्यधिकरणातिरिक्तयोर्माभावः। भूतले घटो नास्ति घटो न पट इत्यादिप्रतीतीनामधिकरणात्मकाभावविषयकत्वेनैव निर्वाहात्।

यत्तूक्तं घटो नास्तीत्यादिप्रतीतीनामनन्ताधिकरणविषयकत्वे गौरवाल्लाघवेनातिरिक्तयोस्तयोस्सिद्धिरिति—

तन्मन्दम्। निरधिकरणकाभावप्रतीत्यभावेन यदधिकरणमन्तर्भाव्ययदभावप्रतीतिस्तस्यास्तदधिकरणात्मकतदभावविषयकत्वोपगमे गौरवाभावात्। न चेह घटो नास्तीत्यादिभ्रमस्थले प्रतीयमानघटाभावस्य घटवत्तदधिकरणानात्मकत्वेनाधिकरणान्तरात्मकघटाभावविषयकत्वे विनिगमनाविरहेणानन्ताधिकरणविषयकत्वेन गौरवं दुर्वारमिति वाच्यम्। तत्र घटवत्तदधिकरणे घटाभावानात्मके सर्वसिद्धाधिकरणान्तरवृत्तिघटाभावत्वस्य भ्रमस्वीकारात्। तस्मादभावचतुष्टयस्यापि नाधिकरणातिरिक्तत्वम्।

न चाभावस्याधिकरणात्मकत्वेऽभेदेनाधाराधेयभावानुपपत्तिरिति वाच्यम्। अभावाधिकरणकाभावस्यानतिरिक्तत्ववादिनस्तवापि घटाभावे घटो नास्तीत्यादौ प्रमेयत्वे प्रमेयत्वमित्यादौ चाभेदेऽप्याधाराधेयभाववत्प्रकृतेऽपि तत्सम्भवात्। यदि चैवं घटवत्यपि भूतले घटो नास्तीतिप्रतीत्यापत्तिः, तदधिकरणस्य घटाभावानात्मकत्वे घटानयनात् पूर्वं घटनयनोत्तरं च तत्प्रतीत्यनापत्तिः,

तस्यैकत्वात् । न च तदानीं घटवत्ताज्ञानसत्वे तस्यैव प्रतिबन्धकतया नोक्तापत्तिः । तादृशज्ञानासत्वे चेष्टापत्तिरिति वाच्यम् । तादृशज्ञानासत्वे जायमानायाः तादृशप्रतीतेर्विषयाबाधेन प्रमात्वापत्तेरिति विभाव्यते । तदापि न क्षतिः । अभावस्याधिकरणात्मकत्वं परित्यज्याधिकरणविषयकज्ञानविशेषात्मकत्वोपगमेन घटकालीनाधिकरणज्ञानस्य घटाभावानात्मकतया तदकालीनाधिकरणज्ञानस्य घटाभावात्मकत्वेन चोक्तापत्त्यनापत्त्योरनवकाशात् । एवं चाभावाधिकरणयोराधाराधेयभावो मोक्षस्य साध्यत्वं चोपपद्यते । न च ज्ञानविशेषस्याभावत्वे निर्जने देशे बन्धविच्छेदे तडागादिभ्यो जलनिस्सरणं न स्यात् । एवमन्धकारे विचरन् कंटकैर्न विध्येत । तत्र कस्याप्यधिकरणज्ञानाभावेन ज्ञानविशेषात्मकजलाभावबन्धविच्छेदतेजोभावात्मकान्धकाराणामसम्भवादिति वाच्यम् । तत्रापि कीटादिजन्तूनामधिकरणज्ञानस्य तदानीमपि सत्वेनोक्तदोषाभावात् ।

वस्तुतस्तु तदधिकरणतत्कालसम्बन्धस्यैवाभावप्रतीतिव्यवहारानियामकत्वेनोपपत्तौ नातिरिक्ताभावकल्पनम् । मानाभावात् । यथा ह्येकेनैव भूतलादिना प्रतियोगी विशेषणं विशेष्य उद्देश्य इत्यादिस्तत्र तत्र व्यवहारस्तथाऽधिकरणकालविशेषसम्बन्धेनैव घटो नास्ति घटो नेत्यादिव्यवहारस्याप्युपपत्तिः । एवं चाधाराधेयभावादिकमपि सुघटमेव । कालसम्बन्धस्याधिकरणे सत्वात्साध्यत्वाच्च । तथा च यत्राधिकरणे कदापि न प्रतियोगी यथा ह्रदादौ वह्न्यादिकं वाय्वादौ रूपादिकं च तत्र तदधिकरणं तस्य कालसम्बन्धो वा तदभावः । अन्यत्र तु तदधिकरणकालविशेषसम्बन्ध एव सः । एवं भेदेऽप्यूह्यम् । एवं घटादिपूर्वकालकपालादिसम्बन्धो घटादिप्रागभावः । उत्तरकालविशेष-

कपालादिसम्बन्धश्च घटादिध्वंस इति बोध्यम् । न चाधिकरणादीनां निष्प्रतियोगिकत्वादभावत्ववित्तिवेद्यत्वाभावाच्च सप्रतियोगिकत्वादिनियतो भावोऽतिरिक्तोऽवश्यमुपेय इति वाच्यम् । घटादेर्घटत्वादिना सप्रतियोगिकत्वाभावत्ववित्तिवेद्यत्वयोरभावेऽपि घटाभावाभावत्वादिना प्रतीतौ तदुभयसत्ववत्तु (?) भूतलादेर्भूतलत्वादिना प्रतीतौ तदभावेऽपि घटाद्यभावत्वेन बुद्धौ तदङ्गीकारेणोपपत्तेः । इदंत्वादिनाऽप्यभावप्रतीत्यनुरोधेन त्वयाप्येवं वाच्यत्वात् । न चाभावस्यानतिरिक्तत्वेऽभावत्वेऽप्यतिरिक्ते मानाभाव इति वाच्यम् । अतिरिक्ताभाववादिनाऽपि तदनुगमाद्यर्थमभावत्वस्यातिरिक्तस्याङ्गीकारात् । घटोऽस्ति न वेत्यादिसंशयादिकोटितावच्छेदकत्वेनाभावत्वस्याखण्डस्यावश्यमुपेयत्वाच्च । न चाभावस्याधिकरणादिरूपत्वे ह्रदो वह्न्यभाव इत्यादिप्रतीत्यापत्तिर्दुर्वारेति वाच्यम् । अतिरिक्ताभावाङ्गीकर्तृमतेऽपि अभावाधिकरणकाभावस्याधिकरणरूपत्वाङ्गीकारेण पटाभावे घटो नास्तीत्यादिप्रतीतिवत्पटाभावो घटाभाव इत्यादिप्रतितेर्दुर्वारत्वात् । इष्टापत्त्यादिसमाधानस्य ममापि सुवचत्वादिति दिक् ।

एतेनाभावस्याधिकरणरूपत्वे जलादिरूपगन्धाभावादेर्घ्राणेन्द्रियेण प्रत्यक्षानुपपत्तिर्जलादेर्घ्राणेन्द्रियायोग्यत्वात् । ज्ञानरूपत्वे घटाद्यभावस्य चाक्षुषत्वानुपपत्तिर्ज्ञानस्याचाक्षुषत्वात् । कालसम्बन्धरूपत्वे घटाद्यभावस्यातीन्द्रियत्वापात्तिः । कालस्यातिन्द्रियत्वादिति प्रलपितमपास्तम् । जलादेर्जलत्वादिना घ्राणेन्द्रियायोग्यत्वेऽपि गन्धाभावत्वादिना तदुपगमेन ज्ञानस्य ज्ञानत्वेनाचाक्षुषत्वेऽपि घटाभावत्वादिना तदुपगमेन कालस्य कालत्वेनातीन्द्रियत्वेऽपि घटाभावत्वादिना ऐन्द्रियत्वस्योपगमेना-

स्माकं षडिन्द्रियवेद्यत्वोपगमेन च दोषासंस्पर्शात् ।

नन्वेवं ध्वंसप्रागभावानङ्गीकारे आद्यत्वचरमत्ववर्तमानत्वभविष्यत्वातीतत्वपूर्वत्वोत्तरत्वानामनुगतानिर्वचनमशक्यम् । तथा हि स्वाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणकालत्वमाद्यत्वम् । उत्तरस्य पूर्वस्य च वारणाय क्रमेण विशेषणद्वयम् । विषयतया स्वाधिकरणज्ञानादेर्वारणाय कालत्वं कालिकविशेषणतयाऽधिकरणत्वप्रापकम् । स्वाधिकरणक्षणप्रागभावानधिकरणत्वे सति स्वाधिकरणत्वं स्ववृत्तियावद्ध्वंसविशिष्टस्वसमवायत्वं वा चरमत्वम् । उपान्त्यपर्यन्तस्य नाशोत्तरस्य च वारणाय पदद्वयम् । स्वध्वंसप्रागभावानधिकरणसमयसम्बन्धो वर्त्तमानत्वम् । वर्त्तमानप्रागभावप्रतियोगित्वं वर्त्तमानक्षणध्वंसाधिकरणक्षणोत्पत्तिमत्वं वा भविष्यत्वम् । वर्त्तमानध्वंसप्रतियोगित्वमतीतत्वम् । तत्प्रागभावाधिकरणकालत्वं तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वं वा पूर्वत्वम् । तद्ध्वंसाधिकरणकालत्वमुत्तरत्वम् । एतेषां च ध्वंसप्रागभावघटितत्वेन तदनङ्गीकारे कथमपि न निर्वाह इति चेत् —

न । एतेषां प्रकारत्वविशेष्यत्वप्रतियोगित्वाभावत्वध्वंसत्ववदतिरिक्ताखण्डोपाधिरूपत्वाभ्युपगमात् । अन्यथा ध्वंसप्रागभावाङ्गीकारेऽपि प्रागभावादिसमये घटादेराश्रयस्यासत्वेन तत्प्रतियोगित्वस्य तत्रासम्भवेन भविष्यन् घट अतीतो घट इत्यादिव्यवहारानिर्वाहात् । न च भविष्यत्वादेरतिरिक्तत्वेऽप्याश्रयासत्वात्कथं निर्वाह इति वाच्यं, तस्याविद्यमानाश्रयस्यैव धर्मिग्राहकमानेन सिद्धेः । न च दृष्टान्तासिद्धिः । अन्यथाऽनुपपत्त्या प्रकारत्वादीनामतिरिक्ताखण्डोपाधिरूपत्वस्यावश्यकत्वात् । तथा हि दण्डीतिज्ञाने दण्डः प्रकारः

पुरुषो विशेष्यः संयोगः संसर्गः। घटोऽयमित्यत्र घटत्वं प्रकारः घटो विशेष्यः समवायश्च संसर्गः। एवमन्यत्र। तच्च विषयताख्यमतिरिक्ताखण्डोपाधिरूपमेव। अन्यस्यासंभवात्। न च भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वं तदनुयोगित्वं विशेष्यत्वमिति वाच्यं, घटघटत्वसमवायाः प्रमेया इत्यादौ घटत्वादेः प्रकारत्वापत्तेः। न च संसर्गमर्यादया भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वमिति वाच्यं, विषयताविशेषमन्तरेण संसर्गत्वस्य दुर्वचत्वात्। समवायस्योभयनिरूप्यतया घटस्यापि प्रकारतापत्तेश्च। न च प्रतियोगित्वानुयोगित्वयोः प्रकारत्वविशेष्यत्वरूपत्वान्नोक्तापत्तिरिति वाच्यं, आत्माश्रयापत्तेः।

यत्तु विशिष्टज्ञानत्वावच्छिन्नजन्यतानिरूपितजनकताश्रयज्ञानविषयत्वं प्रकारत्वम्। विशिष्टज्ञानस्य विशेषणज्ञानजन्यतया लक्षणसमन्वयः। ईश्वरज्ञानमादायातिप्रसङ्गवारणाय विशिष्टज्ञानत्वावच्छिन्नेतीति तन्न ईश्वरज्ञानस्य निष्प्रकारकत्वापत्तेः। एवं निर्विकल्पके विशेष्यस्यापि भानेन तस्यापि प्रकारतापत्तिः। व्याप्यवत्पक्षज्ञानजन्यानुमितौ पक्षस्य प्रकारतापत्तिश्च दुर्वारा। न च विशेष्यान्यत्वस्य निवेशान्न दोष इति वाच्यं, तथाऽप्यभावत्वादेरनुपस्थितस्यैव प्रकारतया भानेन तत्राव्याप्तेः। दण्डी सुन्दर इत्यादौ तादात्म्यसम्बन्धेन प्रकारे दण्ड्यादौ विशेष्यान्यत्वासत्त्वेनाव्याप्तेश्च। विशेष्यत्वस्यापि दुर्वचत्वाच्च। एतेन विशेषणज्ञानत्वेन विशिष्टज्ञानजनकज्ञानविषयत्वमित्यपि निरस्तम्। विशेषणत्वस्य प्रकारत्वात्मकतयात्माश्रयाच्च। तस्मात्प्रकारत्वं विशेष्यत्वं संसर्गत्वं चाखण्डोपाधिरूपं पदार्थान्तरं वा किंचिज्ज्ञाननिरूपितमवश्यमुपेयम्।

एवं घटादौ घटाभावादिप्रतियोगिकत्वमप्यतिरिक्तमेव।

अभावज्ञानप्रकारत्वस्याभावत्वेऽतिप्रसक्तेः । अभावत्वातिरिक्तत्वनिवेशेऽपि प्रमेयोऽभाव इत्यादौ प्रमेयत्वादावतिव्याप्तेः । न चाभावज्ञानेऽवश्यं भासमानत्वं तदिति वाच्यं, अन्धकारस्तम इत्यत्रालोकाभानात्तत्प्रतियोगिन्यालोकेऽव्याप्तेः । न चान्धकारत्वतमस्त्वे आलोकाभावत्वरूप एवेति, तज्ज्ञाने आलोकोऽपि भासत एवेति वाच्यं, आलोकाभावत्वेन ज्ञातेऽन्धकारो भावोऽभावो वेति संशयानुपपत्तेः । न चाभाववत्ताज्ञानप्रतिबन्धकज्ञानाविषयत्वं तदिति वाच्यं, प्रतियोगिव्याप्यवत्ताज्ञानविरुद्धधर्मवत्ताज्ञानस्य चाभाववत्ताज्ञानप्रतिबन्धकत्वेन प्रतियोगिव्याप्यादावतिव्याप्तेः ।

एवमभावत्वमतिरिक्तमेव । न च प्रतियोगिज्ञानप्रतिबन्धकज्ञानविषयत्वं तदिति वाच्यं, अभावव्याप्यादावतिव्याप्तेः । व्याप्यवत्ताज्ञानादिव्यावृत्तप्रतिबन्धकताविशेषस्य दुर्वचतया तन्निवेशासम्भवात् । न च भावान्यत्वं समवायैकार्थसमवायान्यतरसम्बन्धेन सत्ताभावो वा तदिति वाच्यं, अभावत्वघटितत्वेनात्माश्रयात् ।

एवं ध्वंसत्वमपि न जन्याभावत्वं, जन्यत्वस्योत्पत्तिमत्त्वरूपतयोत्पत्तेश्चाद्यक्षणसम्बन्धरूपतयाद्यत्वस्य च ध्वंसत्वघटिततयाऽन्योन्याश्रयापत्तेः । तस्मात्प्रकारत्वादिकं यथाखण्डोपाधिरूपं पदार्थान्तरं वा तथाद्यत्वचरमत्वातीतत्वादिकमपीति न दुर्वचत्वम् । न चाखण्डोपाधित्वे तेषां सप्रतियोगिकत्वासंभवेन कुतश्चिदाद्यत्वं कुतश्चिच्चरमत्वमित्यादिव्यवस्थानुपपत्तिरिति वाच्यम् । यथा तारत्वमन्दत्वादेर्जातिविशेषस्यापि कस्यचित्कुतश्चित्तार इति कुतश्चिन्मन्द इति व्यवहारजनकतया सप्रतियोगिकत्वं यथा वा प्रकारत्वादेरखण्डस्यापि रक्तदण्डवानि-

त्यादौ दण्डे पुरुषापेक्षया प्रकारत्वं रक्तापेक्षया विशेष्यत्वव्यवहारेण सप्रतियोगिकत्वं तथाऽत्रापि सप्रतियोगिकत्वेन कस्य चित्कालस्य कुतश्चिदाद्यत्वं कुतश्चिच्चरमत्वं कुतश्चिदतीतत्वमित्यादिव्यवस्थासंभवात् । तस्माच्चतुर्विधाभावेऽपि मानाभावेन विशेषणतासन्निकर्षो न तद्ग्राहक इति ।

अभावस्यातिरिक्तत्वव्यवस्था

अत्र वदन्ति—भूतले घटो नास्तीत्याद्याकारकाया भूतलाद्यधिकरणकाभावप्रतीतेरपलपितुमशक्यतया तद्भिन्नयोऽतिरिक्तोऽभावोऽवश्यमुपेय एव । अन्यथा भूतले घटोऽस्तीत्यादिप्रतीत्या घटादेरप्यातिरिक्तस्यासिद्धिप्रसंगात् । घटत्वादेः संस्थानविशेषवृत्तित्वेन गुडत्वादेः रसादिवृत्तित्वेन वज्रत्वादेः स्पर्शरूपादिवृत्तित्वेन पृथिवीत्वादेर्गन्धवृत्तित्वेन जलत्वादेः स्नेहादिवृत्तित्वेनोपपत्तेः ।

अवयविनि पूर्वपक्षः

तथा चावयविमात्रं न सिद्ध्येत् । परमाणुसमूहवादापत्तिश्च(१) । अथैको घट इति प्रतीत्या एकदेशाकर्षणेन सर्वाकर्षणादिकार्याज्जलाहरणादिकार्याच्चावयवि-

---

(१) बौद्धास्तु परमाण्वभ्युपगमे परमाणुपुञ्ज एवावयवी, त्रसरेणुविश्रान्त्यभ्युपगमे तु त्रसरेणुपुञ्ज एव । न त्वतिरिक्तः ( कश्चिदवयवीति नाम), प्रमाणाभावात् । अवान्तरानेकद्व्यणुकाद्यतिरिक्तावयविकल्पने गौरवाच्च ।

न चातिरिक्तावयव्यनभ्युपगमे परस्परसंयुक्तपरमाणुपुञ्जस्यैवावयवित्वमते घटो महानित्यादिमहत्वविषयकप्रतीत्यनुपपत्तिः, परमाणौ महत्वाभावादिति वाच्यम् , बौद्धमते महत्वस्य संयोगरूपतया परमाणुवृत्तिसंयोगमादायैव महत्वप्रतीत्युपपत्तेः ।

न चैवंसत्यपि घटो ध्वस्त इति प्रतीत्यनुपपत्तिः, परमाणोर्नित्यतया तत्पुञ्जस्य घटस्य नाशासंभवादिति वाच्यम् , बौद्धमते पदार्थमात्रस्य क्षणिकत्वात्परमाणोः परमाणुपुञ्जस्यापि नाशाभ्युपगमेनानुपप-

स्वीकारस्तर्हि इहेदानीं मणिर्नास्तीत्यादिप्रतीत्या मण्यभावादितो दाहादिकार्येण दुःखनाशे हास्यादिकार्यदर्शनेन घटनाशार्थं मुद्गरपातादौ रोगनाशार्थं भेषजपानादौ प्रवृत्त्या चाभावोऽप्यतिरिक्त आस्ताम् । तस्मादन्वयव्यतिरेकाभ्यां दाहादौ मण्यभावादेर्हेतुताया वाच्यतया सिद्ध एवातिरिक्तोऽभावः ।

एतदभिप्रायेण दीधितिकृतापि "अथैवं जातो घट इतिवदुत्पन्नो घटध्वंस इति प्रत्ययाद्ध्वंसोऽतिरिच्यता"मित्युक्तम् ।

किं चाभावस्याधिकरणाद्यात्मकत्वे यत्र कार्ये प्रतिबन्धकसंसर्गाभावस्य हेतुना तत्रानन्ताधिकरणादीनां हेतुताकल्पने महागौरवापत्त्यातिरिक्तसंसर्गाभावकल्पने लाघवम् । एवं कपालसमवेतनाशादौ कपालनाशादीनां हेतुत्वेऽनन्ताधिकरणाद्यात्मकनाशानां कारणत्वस्य कार्यत्वस्य च कल्पनामपेक्ष्य लाघवेनातिरिक्तध्वंसकल्पनमुचितम् । एवं संस्कारादीनामतीन्द्रियाणां गुणानां मानसवारणायायोग्यगुणेषु वैजात्यमुपेत्य विजातीयगुणत्वेन तेषां प्रतिबन्धकतया लौकिकविषयतया मानसं प्रति विजातीयगुणभेदत्वेन कारणतावश्यकी । तत्रानन्ताधिकरणाद्यात्मकभेदानां कारणताकल्पनापेक्षया लाघवेन भेदस्याप्यतिरिक्तत्वसिद्धिः । एवमननुगताधिकरणादीनामभावत्वकल्पने घटो नास्तीत्याद्यधिकरणविषयकशाब्दादिविषयत्वस्यानन्ताद्यधिकरणेषु जन्यानां तेषामप्रामाणिकानन्तध्वंसधाराकल्पने च महद्गौरवेण लाघवादतिरिक्ताभावसिद्धिरित्यादिकं बहुतरमूहनीयं सु-

---

त्यभावात् । अत एव घट उत्पन्न इति प्रतीतिरपि समाहितपदार्थमात्रस्यैव । तन्मते उत्पन्नतयाऽनुपपत्त्यभावात् ।

द्व्यणुकविश्रान्तित्वमते त्रसरेणुपुञ्ज एव घट इत्यत्राप्युपदर्शितानुपपत्तिः उक्तरीत्या परिहरणीयेति ।

धीभिः । ग्रंथगौरवभिया नेहोच्यते ।

एतेन ध्वंसश्चरमक्षणवर्ती कश्चन भावविकारश्चरमक्षणसम्बन्ध एव वा न त्वतिरिक्तः । उत्पत्तिव्यवहारस्याद्यक्षणसम्बन्धेनेव ध्वंसव्यवहारस्यापि चरमक्षणसम्बन्धेनैवोपपत्तौ प्रतिपदार्थमनन्तध्वंसव्यक्तिकल्पने गौरवात् प्रमाणाभावाच्च । अत एव निरुक्ते ध्वंसो भावविकारेषु भणितः । जायते–अस्ति–वर्द्धते–विपरिणमते–अपक्षीयते–नश्यतीति षड्भावविकारोक्तेरिति निरुक्तानुसारिणां मतमप्यपास्तम् ।

उक्तरीत्या ध्वंसातिरिक्तत्वस्यावश्यकत्वात् । एवं चरमक्षणसम्बन्धस्य ध्वंसत्वेऽनन्तपरमाण्वादिकर्मात्मकक्षणसम्बन्धानां विनिगमनाविरहेण ध्वंसत्वे एकैकव्यक्तिध्वंसस्थले ध्वंसानन्त्यकल्पनापत्तिश्चेति । एवं चाद्यत्वचरमत्वादिकं ध्वंसप्रागभावघटितपूर्वोपदर्शितसखण्डोपाधिरूपमेव । न त्वखण्डोपाधिरूपं क्लृप्तेनैवोपपत्तावखण्डोपाधिरूपत्वे मानाभावात् । न चाविद्यमानानां घटादीनां कथमतीतत्वाद्याश्रयत्वधर्मिणामभावादिति वाच्यम् । अतीतघटादीनां ज्ञातो घट इत्यादिव्यवहारप्रत्ययाभ्यां ज्ञानविषयताश्रयत्ववदतीतादिव्यवहारप्रत्ययाभ्यामतीतत्वादिधर्माश्रयत्वस्याप्यगत्या स्वीकारात् ।

निरुक्तानुसारिणो नव्यानां मते ध्वंसविचारः

अत्र निरुक्तानुसारिणो नव्याः—चरमक्षणसम्बन्ध एव ध्वंसः । तथा सत्येवाद्यक्षणे उत्पद्यते । तदुत्तरमुत्पन्नः । ततः प्रागुत्पत्स्यत इतिवच्चरमक्षणे नश्यति । तदुत्तरं नष्टः । ततः प्राङ्नंक्ष्यतीतिप्रयोगप्रत्यययोरुपपत्तेः । अतिरिक्तध्वंसवादिनां तु तस्यानन्तत्वेन तदुत्पत्तिमारभ्य सर्वदा नश्यतीतिप्रयोगः स्यात् । नष्ट इति च न स्यात् । नाशस्य नाशप्रतियोगित्वरूपातीतत्वाभावात् । अतीतकाल-

वृत्तित्वरूपातीतत्वस्य संभवेऽपि वर्षान्तरनष्टेऽपि घटादौ पूर्वे-द्युर्नष्ट इत्यादिप्रतीतिप्रयोगयोरापत्तिर्दुर्वारा । एवं श्वो भा-विनाशके घटादौ परश्वो नंक्ष्यतीति । तयोरापत्तिश्च पर-श्वोरूपभविष्यत्कालवृत्तिनाशप्रतियोगित्वस्य सत्वात् ।

यत्तु नश्यति नंक्ष्यति नष्ट इत्यादौ लडादिप्रत्ययो नोत्पत्तिः। प्रतियोगित्वं च लक्ष्यते । तस्यां च लडर्थवर्त्तमानत्वस्य वर्त्तमानप्रागभावप्रतियोगित्वरूपस्य वर्त्तमानकालध्वंसाधिकरण-कालीनत्वस्य वा लृडर्थभविष्यत्वस्य वर्तमानकालवृत्तिध्वंस-प्रतियोगित्वरूपस्यातीतत्वस्य चान्वयः । परश्वसादिपदोपस्था-प्यकालस्याख्यातार्थकालेनाभेदान्वयाच्च नोक्तदोषः । नश्यती-त्यत्र वर्तमानोत्पत्तिकनाशप्रतियोगीति परश्वो नंक्ष्यतीत्यत्र वर्त-मानप्रागभावप्रतियोगिपरश्वः कालोत्पत्तिकनाशप्रतियोगी नष्ट इत्यत्र वर्तमानकालवृत्तिध्वंसप्रतियोग्युत्पत्तिकनाशप्रतियोगीति बोधादिति–दीधितिकारैरुक्तम्—

तन्न समंजसम् । विशेष्यतया प्रत्येकलकारार्थकाला-द्यतिरिक्तख्यातार्थप्रकारकबोधे इतराविशेषणतया प्रथमान्तप-दजन्योपस्थितेर्हेतुत्वस्य निरुक्ताख्यातार्थस्य धात्वर्थे प्रति विशेष्यतानियमस्य च आख्यातवादे तैरेव निर्णीतत्वेनो-त्पत्तेर्धात्वर्थे नाशे अन्वयासंभवात् । अकर्मकधातुसमभि-व्याहृताख्यातार्थकालस्य धात्वर्थ एवान्वयस्य व्युत्पन्नतया प्रत्ययार्थोत्पत्तावन्वयस्याप्यसंभवाच्च । न च नशधातोर-वोत्पत्तौ लक्षणाभ्युपेत्य पूर्ववदेवान्वयबोधोपगमान्न दोष इति वाच्यं, पृथगुत्पत्तौ धातोर्लक्षणोपगमे युगपद्वृत्तिद्वयविरोधात् । विशेष्यतया धात्वर्थप्रकारकशाब्दबोधे तिङ्कृदन्यतरजन्योप-स्थितेर्हेतुत्वस्यापि तैरेवोक्तत्वेन धात्वर्थे नाशे धात्वर्थोत्पत्ते-

रन्वयासंभवाच्च । न च नीलपदस्य नीलरूपवतीव नश्धातो-र्नाशोत्पत्तौ लक्षणेति वाच्यम्, उत्पत्तेर्नाशान्वयासंभवात् । उत्प-त्तिविशेषणत्वेनोपस्थितस्य नाशस्योक्तप्रत्ययार्थप्रतियोगितायाम-न्वयासंभवाच्च । न च प्रजपतीत्यादौ जिधातोः प्रकृष्टजप इव नश्धातोरुत्पत्तिविशिष्टनाशे लक्षणेति वाच्यम् । एवं सति पदार्थ-तावच्छेदकतयैकदेशोत्पत्तौ कालान्वयासंभवात् । अन्यथा ग-च्छतीत्यादौ संयोगेऽपि वर्तमानत्वान्वयापत्त्या गमनक्रियानाशो-त्तरमपि तज्जन्यसंयोगस्य चिरमवस्थानाद्गच्छतीति प्रयोगापत्तेः । एते नश्तावाफलव्यापारौ पृथगेव धात्वर्थावितिपक्षे फलव्यापा-रयोरिवोत्पत्तिनाशयोर्धातुनोपस्थापनान्नैकदोषान्वयः । गंगायां घोषमत्स्यौ स्त इत्यत्रेव युगपद्वृत्तिद्वयविरोधो न दूषणम् । धात्वर्थप्रकारकबोधे कृदादिजन्योपस्थितिवद्धातुजन्योपस्थिते-रपि हेतुत्वस्य फलव्यापारयोरन्वयबोधार्थमावश्यकतया कृ-दादिजन्योपस्थितिरूपकारणाभावप्रयुक्तो धात्वर्थे नाशे धा-त्वर्थोत्पत्तेरन्वयासम्भवरूपदोषेऽपि नेत्यपास्तम् । एवमपि फलतुल्यतयोत्पत्तौ कालान्वयासम्भवात् । किञ्च सामा-न्यतो धात्वर्थप्रकारकबोधे धातुजन्योपस्थितेर्हेतुत्वाभ्युपगमे फलस्य व्यापार इव व्यापारस्य फलेऽपि विशेषणतयाऽ-न्वयापत्तिः । न चेष्टापत्तिः । तथा सति चैत्रेण पच्यते तण्डुल इत्यादौ चैत्रनिष्ठकृतिजन्यपाकजन्यफलशाली तण्डुल इत्यादिशाब्दबोधस्य धात्वर्थफलेनैवोपपत्तौ कर्माख्यातस्य फ-लवाचकताभ्युपगमवैयर्थ्यापत्तेः । तस्माद्धात्वर्थफलप्रकारकबोधे धातुजन्योपस्थितेर्हेतुत्वं वाच्यमिति फलानात्मकोत्पत्तेर्नाशेऽन्व-यानुपपत्तिस्तदवस्थैव । न चोत्पत्तेः फलत्वोपगमान्न दोष इति वाच्यम् । तथा सति नश्धातोः सकर्मकत्वापत्तेः । एतत्पक्षे फल-

व्यापारोभयबोधकत्वस्यैव सकर्मकत्वादिति वदन्ति—

तदसत्। नशूधातोर्नाशोत्पत्तौ लक्षणामुपेत्य तस्याः स्वाश्रयप्रतियोगित्वसम्बन्धेन घटादावन्वयोपगमेन नीलपदस्य नीलरूपवतीव लडादेर्वर्तमानत्वातीतत्वभविष्यत्वादिविशिष्टोत्पत्तौ लक्षणोपगमेनोत्पत्तेः। कालांशपातेन उत्पत्तेराद्यक्षणसम्बन्धरूपतया तादृशसम्बन्धस्य च क्षणात्मककालरूपतया च धात्वर्थे नाशेऽन्वयसम्भवेन चोपदर्शितप्रयोगोपपत्त्यतिप्रसङ्गवारणासम्भवात्। अथ ध्वंसस्याविनाशित्वासिद्धावुपदर्शितातिप्रसङ्गवारणायोक्तरीत्योत्पत्तौ धातोर्लक्षणयाऽतिप्रसङ्गवारणे च ध्वंसस्य विनाशित्वमित्यन्योन्याश्रयो दुर्वारः। न च ध्वंसप्रागभावानधिकरणकालस्य प्रतियोग्यधिकरणत्वनियमेन ध्वंसस्य विनाशित्वे घटाद्युन्मज्जनप्रसङ्ग इति। स एव ध्वंसस्याविनाशित्वसाधक इति नान्योन्याश्रय इति वाच्यं, घटादिध्वंसध्वंसस्यापि घटादिध्वंसत्वांगीकारेण घटाद्युन्मज्जनप्रसंगवारणे तस्य ध्वंसाविनाशित्वसाधकत्वाभावादिति चेत्—

न। उत्पत्तिज्ञप्त्योरेवान्योन्याश्रयस्य दोषतयैतादृशान्योन्याश्रयस्यादोषत्वात्। अप्रामाणिकानन्तध्वंसधाराकल्पनगौरवप्रसङ्गस्यैव ध्वंसाविनाशित्वसाधकतयाऽन्योन्याश्रयस्यैवासम्भवाच्च। तस्मादुपदर्शितरीत्याऽभावस्यातिरिक्तत्वं निष्प्रत्यूहमिति दिक्।

अतिरिक्ताभावाङ्गीकारे आपत्तिः।

नन्वतिरिक्ताभावांगीकर्तृसिद्धान्तिमते यत्र पूर्वोत्तरकालयोर्मण्यादिशून्ये देशे मध्ये मण्यादिरानीतस्तत्र मण्याद्यानयनोत्तरमपि दाहादिकार्यापत्तिः। तत्र मण्याद्यानयनात्पूर्वं परतश्च सतो मण्याद्यन्ताभावस्य नित्यतया तदानीमपि सत्वात्। एवं तत्र मण्याद्यानयनकाले मणिर्ना-

स्तीयादिप्रतीत्यापत्तिश्च । तत्र मण्याद्यत्यन्ताभावरूपविषयस्य नित्यतया सत्वादिति चेत्—

अत्र प्राञ्चः—उक्तस्थले न मण्याद्यत्यन्ताभावसत्त्वं, त्रैकालिकसंसर्गाभावस्यैवात्यन्ताभावरूपतया यत्र कदापि न प्रतियोगिसत्त्वं तत्रैव नित्यस्यात्यन्ताभावस्य सत्वम् । यथा वाय्वादौ रूपाद्यभावादेः । अत एव दाहादिकार्यं कादाचित्कत्वप्रयोजकः प्रतियोगिसमानाधिकरण उत्पत्तिविनाशशाली संसर्गाभावविशेषस्त्रिविधसंसर्गाभावातिरिक्तस्सामयिकाभावव्यपदेश्यः स्वीक्रियते । सामयिकत्वं च समयविशेषे उत्पत्तिविनाशशालित्वमेव । एवं चोक्तस्थले मण्याद्यानयनात्पूर्वं परतश्च सतोऽपि तस्य मण्याद्यानयनोत्तरं नाशेन न दाहाद्यापत्तिर्न वा तत्प्रतीत्यापत्तिः। भूतलादौ घटाद्यभावोऽपि स एव, न त्वत्यन्ताभावः । न चैवं तस्य नित्येऽत्यन्ताभावेऽजन्ये प्रागभावेऽविनाशिनि ध्वंसे चान्तर्भावासम्भवात् संसर्गाभावत्रैविध्यानुपपत्तिरिति वाच्यं, संसर्गाभावचातुर्विध्यस्यैवोपगमेन तत्त्रैविध्याभावे इष्टापत्तेः । जन्याभावत्वं ध्वंसत्वं, विनाश्यभावत्वं प्रागभावत्वमिति परिभाषामाश्रित्य ध्वंसप्रागभावान्यतरस्मिन्नेव तस्यान्तर्भावसम्भवे त्रैविध्यस्योपपत्तिसम्भवाच्चेत्याहुः ।

लीलावतीकारा(१)नुयायिनस्तु—उक्तसामयिकसंसर्गाभावान्तरे मानाभावः, उक्तापत्तेः प्रकारान्तरेणैव वारणात् । तथा हि—मण्यादिसंयोगत्वेनैव दाहादिप्रतिबन्धकतया तदवच्छिन्नाभावस्तद्धेतुः । स च यत्राधिकरणे कदापि न मणिसंयोगस्तत्रात्यन्ताभाव एव हेतुः । अन्यत्र ध्वंसप्रागभावावेव तथाविधौ हेतू । तयोरपि सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वोपगमात् ।

(१) न्यायलीलावतीकारा वल्लभाचार्याः ।

अतो मणिसंयोगदशायां मणिसंयोगत्वावच्छिन्नध्वंसप्रागभाव-योरसत्वान्न दाहः । मणिसंयोगाभाव एव च संयोगसम्बन्धाव-च्छिन्नप्रतियोगिताकमण्यभावसम्बन्धोपीत्यतः मणिसंयोगदशा-यां न तत्र मण्यभावप्रतीतिः ।

अस्तु वा मण्यभावस्य स एव कारणतावच्छेदकसम्बन्धो-पीति मणेः प्रतिबन्धकत्वमपि भवतु मणिसंयोगसमये कारण-तावच्छेदकसम्बन्धविरहान्न तदा दाहः ।

अस्तु वा वस्तुगत्या यो यः प्रतियोगिविरहकालस्स एवा-भावाधिकरणयोः संसर्गः कारणतावच्छेदकः प्रतीतिनियामकश्च । नात उक्तानुपपत्तिः । सामयिकत्वं च समयविशेष एव सत्व-रूपामिति ध्वंसप्रागभावयोरेव सामायिकतया ताभ्यामेव सामयि-काभावव्यपदेशोपीत्याहुः—

तदसत् । मणिसंयोगाद्यन्तरध्वंसोत्तरं कियत्काल इव पुन-स्तत्संयोगाद्यन्तरोत्पत्तावपि दाहाद्यापत्तेः । पूर्वकाले दाहाद्य-नुरोधेनावश्यमुपेयस्य मणिसंयोगत्वाद्यवच्छिन्नध्वंसस्याविनाशि-नो पूर्वकाल इवाद्येऽपि सत्वात् । ध्वंसप्रागभावयोरेकैकप्रति-योगिकत्वे सामान्यधर्मस्यातिप्रसक्ततया प्रतियोगितावच्छेदक-त्वासम्भवः । सकलप्रतियोगिकत्वे ध्वंसे प्रतियोगिना हेतुतया युगपत्सकलप्रतियोगिनामसत्वेन तदसम्भव इत्युभयथापि ध्वंस-प्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्यासम्भवाच्च ।

मणिकारानुयायिनां मते विचारः ।

मणिकारानुयायिनस्तु—मण्यादिशून्ये भूतलादौ मण्याद्यान-यनोत्तरमपि मण्याद्यत्यन्ताभावोऽस्त्येव । अ-न्यथा तस्य त्रैकालिकसंसर्गाभावत्वानुपपत्त्याऽ-त्यन्ताभावत्वस्यैवानुपपत्तेः । परन्तु तत्तत्कालविशेषावच्छिन्नत-त्तद्भूतलादिस्वरूपस्य दाहादिकारणतावच्छेदकसम्बन्धत्वं मणि-

नास्तीत्यादिप्रतीतिनियामकसम्बन्धत्वं चोपेयत इति नोक्तदोषापत्तिः । सामायिकत्वं च समयविशेषे संबद्धत्वमित्यत्यन्ताभावविशेष एव सामायिकाभाव इति व्यपदिश्यत इति वदन्ति ।

दीधितिकारमतम् दीधितिकृतस्तु लाघवाद्दाहादिकारणतावच्छेदकमभावस्य वैशिष्ट्यं सम्बन्धान्तरमेवोपेयत इति नोक्तदोषापत्तिः । न च तस्य नित्यत्वे उक्तदोषानिवृत्तिरनित्यत्वे तदुत्पत्तिविनाशकल्पने गौरवमिति वाच्यं, फलमुखगौरवस्यादोषत्वादिति प्राहुः ।

यत्तु प्रतियोगिदेशान्यदेशत्वमेवाभावाधिकरणयोः सम्बन्धोऽनुगत उपेयते तेनैव सम्बन्धेनाभावः प्रतीयते कारणं चेति नोक्तदोष इति–

तन्न । अन्योन्याभावस्य व्याप्यवृत्तित्वे मण्याद्यानयनात्प्राग्दाहाद्यनुरोधेन तदधिकरणे प्रतियोगिदेशान्यदेशत्वसत्त्वेन मण्याद्यानयनेऽपि दाहाद्यापत्तेः । वृक्षादावव्याप्यवृत्तिसंयोगाद्यत्यन्ताभावप्रतीत्यनापत्तेश्च । तस्याव्याप्यवृत्तित्वे च शिरस्सम्बन्धद्वारावद्दौषधात्सर्वाङ्गाच्छेदनानापत्तेः । शिरोभिन्नभागावच्छेदेन प्रतियोगिदेशान्यदेशत्वस्य तत्र सत्त्वात् । पक्षद्वयेऽप्यन्योन्याभावस्यापि नित्यनिष्क्रियत्वेन प्रतिबन्धकसमवधानात्पूर्वं सतस्तत्समवधानेऽप्यनपाये न दाहादिकार्याभावप्रतीत्योर्दुर्वारत्वाच्चेति कृतमतिशयस्तरेण ।

भट्टानुयायिनां मतम् अत्र भट्टानुयायिनः—एवमपि विशेषणताप्रत्यासत्तेर्नाभावग्राहकत्वं, अभावस्यानुपलब्धिरूपप्रमाणान्तरगम्यत्वात् । तथा हि–योग्यानुपलब्धेरभावग्रहकारणत्वेन सर्वसिद्धायाः स्वरूपसत्या एव विनापि प्रत्यासत्तिमभावग्रहे करणत्वं कल्प्यते । व्यापाराभावेऽपि फलायोगव्यवच्छिन्नकारणत्व-

रूपकरणत्वस्य संभवात् । इन्द्रियस्य करणत्वे चासन्निकृष्टस्य तस्य प्रमाजनकत्वासंभवेन विशेषणताप्रत्यासत्तेस्तत्कारणत्वान्तरस्य च कल्पने गौरवापत्तेः । न चैवमन्धस्यापि घटाद्यनुपलब्धिसत्त्वाद्घटाद्यभावप्रतीत्यापत्तिरिति वाच्यं, अभावग्रहेऽधिकरणप्रतियोगिज्ञानयोर्हेतुतया तदर्थं चक्षुराद्यपेक्षणात् । जनकसंपादकत्वेनान्यथासिद्धतयेन्द्रियस्याभावग्रहे हेतुत्वासंभवाच्च । न च भूतले घटाभावं पश्यामीत्याद्यनुभवानुरोधेनेन्द्रियस्याभावज्ञानजनकत्वमिति वाच्यं, घटो नास्तीतिजानामीत्याद्याकारकानुभवेन तादृशानुभवस्यासिद्धेरिति वदन्ति ।

अत्रोच्यते—अनुपलब्धेरालोकवदिन्द्रियसहकारित्वेनैवोपपत्तौ प्रमाणान्तरकल्पने गौरवम् । प्रमानिष्ठवैजात्यकल्पनमन्तरेण प्रमाणान्तरत्वकल्पनाया असंभवात् । सहकारित्वं चाभावप्रत्यक्षत्वावच्छिन्ने संभवत्येव । अन्धकारान्यचाक्षुषत्वावच्छिन्न इवालोकस्य न च प्रत्यासत्त्यन्तरकल्पनागौरवमिति वाच्यम्, समवायग्रहार्थं तत्कल्पनाया आवश्यकत्वात् । अभावग्रहे तस्याः कारणत्वान्तरकल्पनेऽपि विजातीयप्रमारूपधर्मिकल्पनाविरहेण ततोऽपि लाघवात् । अन्यथा शब्दग्रहार्थमपि प्रमाणान्तरकल्पनापत्तेः ।

इन्द्रियजन्यं प्रत्यक्षमेवाभावस्य वस्तुतो भूतले घटो नास्तीति मया दृष्टमित्यनुभवादिन्द्रियस्यानन्यथासिद्धान्वयव्यतिरेकवशाच्चेन्द्रियजन्यं प्रत्यक्षमेवाभावस्य युक्तम् । दृशेश्चाक्षुषज्ञानवाचकतया अनुमित्यादाविवानुपलब्धेऽप्यसंभवात् । न चेन्द्रियस्याधिकरणादिग्रह एवोपयोग इत्युक्तमिति वाच्यं, अधिकरणादिज्ञानस्यानुमितिस्मरणाद्यात्मकस्यान्धतादशायामपि सत्त्वेनाभावग्रहापत्तेः । न चानुपलब्धाभावज्ञाने प्रतियोगि-

ग्राहकेन्द्रियजन्यमधिकरणादिज्ञानेहेतुरिति वाच्यं, वायावुद्भूतरूपाभावस्य परमाणौ महात्वाभावस्याग्रहापत्तेः । स्तम्भे पिशाचत्वं नास्तीत्याद्यभावग्रहे प्रतियोगिग्राहकेन्द्रियाप्रसिद्धेश्च ।

वस्तुतस्तु वक्ष्यमाणरीत्या योग्यानुपलब्धेरभावग्रहे हेतुत्वस्यैवाभावेन न तस्याः प्रमाणान्तरत्वशंकापीति दिक् ।

अभाव-लक्षणम् अथ कोऽयमभावो नाम ? न च द्रव्यादिषट्कान्योन्याभाववानभाव इति वाच्यं, अन्योन्याभावत्वस्याभावत्वगर्भतयाऽन्योन्याश्रयादिति चेत्—

अत्राहुः—तादात्म्यसम्बन्धावच्छिन्नद्रव्यादिषट्कनिष्ठप्रतियोगितानिरूपितानुयोगिताविशेष एवाभावत्वमखण्डोपाधिविशेष एव वेति । अधिकमग्रे वक्ष्याम इति संक्षेपः ।

विशेषणतासन्निकर्षस्याभावग्रहकत्वे आपत्तिः ननु विशेषणतासन्निकर्षस्याभावग्राहकत्वे जलपरमाण्वादौ पृथिवीत्वाद्यभावग्रहापत्तिः । तत्रापि चक्षुःसंयुक्तविशेषणतायाः सत्त्वादिति चेत्—

न । योग्यानुपलब्धेरप्यभाव प्रत्यक्षहेतुतयोक्तस्थले तदभावेनाग्रहोपपत्तेः ।

योग्यानुपलब्धिः का ? अथ केयं योग्यानुपलब्धिर्यदभावाज्जलपरमाण्वादौ पृथिवीत्वाद्यभावप्रत्यक्षमिति चेत्—

तत्र मणिकृन्मतम् अत्र मणिकृतः—यत्र यस्य सत्त्वमनुपलब्धिविरोधि तत्र तस्याभावो योग्यानुपलब्ध्यर्थः । अस्यार्थः—यस्य प्रतियोगिनः सत्त्वमाश्रयत्वं यत्राधिकरणे अनुपलब्धिविरोधि प्रतियोगिसत्त्वोपलंभविषयत्वाभावप्रतियोगिनः प्रतियोग्युपलम्भविषयत्वस्य प्रसंजकमित्यर्थः । प्रसक्तिरापत्तिः । यत्रेति सप्तम्यर्थविषयत्वस्य विरोधिपदार्थघटकापत्तावन्वयः । तत्रेत्यनन्तरं "प्रतियोगिनोऽनुपल-

ब्धयेति"। अभाव इत्यनन्तरं च 'गृह्यत इती'ति पूरणीयम्। योग्यानुपलब्ध्यर्थः योग्यानुपलब्ध्या(ब्ध्य?)भावो गृह्यत इत्यस्यार्थः। तथा च योग्यस्य प्रतियोगिनोऽनुपलब्धिर्योग्याधिकरणे प्रतियोगिनोऽनुपलब्धिर्वा न योग्यानुपलब्ध्यर्थः। जलपरमाण्वादौ पृथिवीत्वाद्यभावग्रहापत्तेः। भूतलादौ पिशाचाद्यभावग्रहापत्तेश्च। किन्तु योग्या अनुपलब्धिरेव। अनुपलब्ध्यौ योग्यता च प्रतियोगिसत्वप्रसंजितप्रतियोगिकत्वरूपा पारिभाषिकी। अनुपलम्भप्रतियोगिनः प्रतियोगिसत्वप्रसंजितत्वं च प्रतियोगिसत्वापादकतदधिकरणपक्षकापत्तियोग्यत्वम्। योग्यता च तदधिकरणे आरोपितप्रतियोगिनिरूपितव्यापकत्वम्। अतो व्याप्तिभ्रमाज्जलपरमाणुर्यदि पृथिवीत्ववान् स्यात्तदा पृथिवीत्ववत्त्वेनोपलभ्येतेत्यापत्तिसंभवेऽपि न क्षतिः। अत्र प्रतियोगिन इतरविशेषिताविशेषितसाधारणस्यापादकता विवक्षिता। तेनालोकसमवधानशून्ये इन्द्रियासन्निकृष्टे अयोग्ये चाधिकरणे घटादिरूपप्रतियोगिनस्तदुपलम्भविषयताया व्यभिचारेणापत्त्यसंभवेऽपि आलोकसमवधानादिमति भूतलादौ घटाद्यभावप्रत्यक्षोपपत्तिः। इतराविशेषितघटादेस्तदुपलम्भव्यभिचारेऽपि इदं भूतलमालोकसंयोगावच्छेदकावच्छिन्नचक्षुःसंयोगवत्वे सति उद्भूतरूपवत्वे सति घटवत्स्यात्। घटवत्त्वेनोपलभ्येतेत्यापत्तिसंभवात्। न चैवं महत्वसमानाधिकरणपृथिवीत्वादेरपि पृथिवीत्वादिमत्वेनोपलंभविषयत्वापादकत्वसंभवेन स्थूलजलादाविव जलपरमाण्वादौ पृथिवीत्वाद्यभावप्रत्यक्षापत्तिर्दुर्वारेति वाच्यम्। पक्षावृत्तिविशेषणसामानाधिकरण्यानवच्छिन्नत्वस्यापादकतायां निवेशादित्याहुः।

आचार्यानुयायिनस्तु मणिकृदुक्तयोग्यानुपलब्धेरभाव-

ग्राहकत्वे पिशाचादौ स्तम्भत्वाद्यभावप्रत्यक्षापत्तिः। पिशाचो यदि चक्षुरादिसन्निकृष्टत्वे सति स्तंभः स्यात् तत्त्वेनोपलभ्येतेत्यादिरीत्या तत्राप्यापादनसम्भवादिति प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसहितानुपलब्धिर्योग्यानुपलब्धिरभावग्राहिका। जलपरमाण्वादौ पिशाचादौ च प्रतियोग्युपलम्भकमहत्त्वोद्भूतरूपाद्यभावान्न प्रतियोग्युपलम्भकसकलहेतुसमवधानमिति न तत्र पृथिवीत्वाभावस्तम्भत्वाभावादिग्राहकोऽनुपलम्भो योग्यः। परमाण्वादौ महत्त्वादिरूपस्य महत्त्वाद्युपलम्भकस्याभावात्तत्र महत्वाद्यनुपलम्भस्य महत्त्वाभावादिग्राहकयोग्यता न स्यादिति प्रतियोगीतरत्वमुपलम्भकविशेषणम्। अभावप्रतियोगिग्राहकस्य प्रतियोगिसन्निकर्षादेर्वारणाय प्रतियोगिव्याप्येतरेति। अथ घटचक्षुःसंयोगस्य घटव्यधिकरणस्य घटाव्याप्यतया कथं व्याप्येतरत्वविशेषणेन व्यावृत्तिः। इन्द्रियेऽपि वर्त्तमानं घटेन्द्रियसन्निकर्षं प्रति तादात्म्यसम्बन्धेनापि घटस्याव्यापकत्वात्। कालिकव्याप्तिनिवेशे च जात्यादिरूपप्रतियोगिनो व्याप्येतराप्रसिद्धिः। गगनादेः कालिकसम्बन्धेनावृत्तित्वमते तत्र व्याप्येतरत्वप्रसिद्धावपि तद्व्याप्येतरतदुपलम्भकाप्रसिद्धिर्दुर्वारैव। कालादेस्तथात्वेऽपि महत्त्वादेस्तादृशव्याप्तिमत्तया पृथिवीत्वाद्यभावग्रहे अधिकरणमहत्त्वाद्यपेक्षाया दुर्घटत्वमिति चेत्—

नैवम्। व्याप्यपदमसाधारणप्रतियोग्युपलम्भकपरम्। तत्त्वं चाधिकरणप्रत्यासन्नतया प्रतियोग्युपलंभकत्वम्। तदुपादानादधिकरणप्रत्यासत्त्या प्रतियोग्युपलंभकयावत्साहित्यलाभः। तत्त्वं च प्रतियोगिप्रकारतानिरूपिताधिकरणविषयताप्रयोजकत्वमिति नोक्तदोषः। न चैवमपि पिशाचत्वादेरतीन्द्रियतया तदुपलंभाप्रसिद्ध्या स्तंभादौ तदभावग्रहानुपपत्तिरुक्त-

योग्यानुपलब्धेरभावादिति वाच्यम् । अतीन्द्रियप्रतियोगिकाभावस्य प्रत्यक्षानुपगमेन तत्र योग्यानुपलब्धेरहेतुत्वादित्याहुः ।

नवीनास्तु उक्तयोग्यानुपलब्धिरपि नाभावप्रत्यक्षे हेतुस्तथा सति ककारादिव्यञ्जकविजातीयवायुसंयोगस्य प्रतियोगिप्रकारतानिरूपिताधिकरणविषयत्वाप्रयोजकत्वेन वर्णाभावप्रत्यक्षानिर्वाहात् । किन्तु योग्यानुपलब्धिरित्यस्य योग्यताऽनुपलब्धिश्चेत्यर्थः । योग्यता च योग्यः सन्निकर्षो विषययोग्यता च । योग्यसन्निकर्षो महत्त्वाभावरूपाभावेतराभावचाक्षुषे चक्षुःसन्निकृष्टमहत्त्वोद्भूतरूपवद्विशेषणता । महत्त्वाभावचाक्षुषे महत्त्वाघटिता । रूपाभावचाक्षुषे रूपाघटितैव ग्राह्या । एवं महत्त्वाभावोद्भूतस्पर्शाभावेतराभावस्पार्शने त्वक्सन्निकृष्टमहत्त्वोद्भूतस्पर्शवद्विशेषणता । महत्त्वाभावस्पार्शने महत्त्वाघटिता । उद्भूतस्पर्शाभावस्पार्शने उद्भूतस्पर्शाघटिता बोध्या । एवं गन्धाद्यभावघ्राणजादौ घ्राणादिसन्निकृष्टमहत्त्ववद्विशेषणता । शब्दाभावप्रत्यक्षे इन्द्रियविशेषणतेत्यादिकमूह्यम् । विषययोग्यता च मूर्त्तसामान्याभावादिभेदरूपा लौकिकविषयत्वरूपा वा । न चैवं योग्यताया अननुगम इति वाच्यं, अगत्येष्टत्वात् । अनुपलब्धिश्च तदिन्द्रियजन्यतदधिकरणवैशिष्ट्यावगाहितद्धर्मावच्छिन्नाभावलौकिकप्रत्यक्षे तदिन्द्रियजन्यतदधिकरणविशेष्यकतद्धर्मावच्छिन्नलौकिकप्रत्यक्षाभावरूपा । तेन जलपरमाण्वादौ न पृथिवीत्वाद्यभावप्रत्यक्षम् । न च चक्षुःसन्निकृष्टमहत्त्वोद्भूतरूपवद्विशेषणतारूपयोग्यसन्निकर्षाभावादेव जलपरमाण्वादौ पृथिवीत्वाद्यभावप्रत्यक्षवारणसंभवे निरुक्तानुपलब्धेरभावप्रत्यक्षहेतुत्वे मानाभाव इति वाच्यम् । यत्र स्थूलजलादावपि चक्षुःसंयोगो विद्यते तदा पृथिवी-

त्वाभावे तादृशयोग्यसान्निकर्षस्यापि सत्वेनोपनीतजलपरमाण्वादिविशेषणकस्य जलपरमाणौ पृथिवीत्वं नास्तीत्याकारकप्रत्यक्षस्यापत्तिवारणाय तद्धेतुताया आवश्यकत्वादिति वदन्ति।

अतिनवीनानां अभावप्रत्यक्ष-विषये मतम्

अत्रातिनवीनाः—अभावप्रत्यक्षे निरुक्तयोग्यानुपलब्धेर्हेतुत्वे मानाभावः। जलपरमाण्वादौ पृथिवीत्वाद्यभावग्रहस्याप्रसिद्ध्यापादनासंभवात्। न च प्रसिद्धस्य पृथिवीत्वाद्यभावग्रहस्याभावविषयतानिरूपिताविषयतासम्बन्धेन जलपरमाण्वादावापत्तिः संभवतीति वाच्यं, आपादकाभावात्। न च विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकप्रतियोग्युपलंभाभावस्य बाधाभावमुद्रया तेन सम्बन्धेनाभावप्रत्यक्षे हेतुतया तस्यैव जलपरमाण्वादौ तेन सम्बन्धेनाभावप्रत्यक्षापादकत्वमिति वाच्यं, प्रतियोग्युपलंभस्यात्मनिष्ठप्रत्यासत्त्यैव प्रतिबन्धकत्वोपगमेनात्मनिष्ठप्रत्यासत्त्यैव तदभावस्य हेतुतया विषयनिष्ठप्रत्यासत्त्या तदभावप्रत्यक्षापादकत्वविरहात्। न चात्मनिष्ठप्रत्यासत्त्या प्रतिबन्धकत्वोपगमे अधिकरणविशेषान्तर्भाव आवश्यकः। अन्यथाऽधिकरणान्तरविशेष्यकप्रतियोग्युपलंभस्याप्यधिकरणान्तरावगाह्यभावप्रत्यक्षं प्रति प्रतिबन्धकत्वापत्तेः। तथा चानन्ताधिकरणाभेदेन प्रतिबन्धकताबाहुल्यापत्तिरिति तदपेक्षयाऽधिकरणनिष्ठप्रत्यासत्त्या प्रतिबन्धकतायां लाघवमिति वाच्यम्। समानविशेष्यकयोरपि विभिन्नधर्मितावच्छेदककाभावप्रत्यक्षप्रतियोग्युपलंभयोः प्रतिबध्यप्रतिबन्धकभावविरहेण समानविशेष्यताप्रत्यासत्तिकल्पेऽपि धर्मितावच्छेदकविशेषनिवेशस्यावश्यकतया धर्मितावच्छेदकधर्मानिवेशस्याधिकरणान्यनिवेश्यात्मनिष्ठप्रत्यासत्त्यैव प्रतिबन्धकत्वोपगमेन भिन्नविशेष्यकयोरपि समानधर्मितावच्छेदकज्ञानयोः प्रतिबध्यप्रति-

बन्धकभावोपगमे क्षतिविरहात् । अथ धर्मितावच्छेदकभेदेन प्रतिबन्धकताकल्पनमपेक्ष्य समानधर्मितावच्छेदकत्वप्रत्यासत्त्यैव तत्कल्पनमुचितम् । एवं च प्रतियोग्युपलंभाभावस्य धर्मितावच्छेदकानिष्ठप्रत्यासत्त्यैव हेतुतया जलपरमाणुत्वादौ तादृशकारणबलात्पृथिवीत्वाद्यभावप्रत्यक्षापत्तिवारणाय योग्यताविशिष्टधर्मितावच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकप्रतियोग्युपलम्भाभावस्य हेतुत्वमावश्यकम् । योग्यता वैशिष्ट्यं च प्रतियोगितव्याप्येतरप्रतियोग्युपलंभककारणस्तोमसमानाधिकरणवृत्तित्वम् । जलपरमाणुत्वादौ च तद्विशिष्टानुपलंभाभावान्नातिप्रसंग इति चेत्—

न । धर्मितावच्छेदकघटितनिश्चयत्वानाहार्यत्वादिनिवेशानुरोधेन प्रतिबन्धकतावच्छेदककोटौ धर्मितावच्छेदकानिवेशस्यावश्यकतया आत्मनिष्ठप्रत्यासत्त्यैव प्रतियोग्युपलंभस्य प्रतिबन्धकत्वात् ।

वस्तुतस्तु तुल्ययुक्त्याऽनुमितिपरामर्शयोर्हेतुत्वमपि समानधर्मितावच्छेदकत्वप्रत्यासत्त्यैव वाच्यम् । तथा च घटो घटभेदव्याप्यवानित्याद्याकारकपरामर्शाद्धटो घटाभिन्न इत्याद्यनुमितिवारणाय तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदस्यावश्यं कारणता कल्पनीया । एवं च तत्र घटभेदाद्यनुमितेर्धर्मितावच्छेदकतासम्बन्धेनोत्पत्तौ घटत्वादिभेदस्यापेक्षणीयतया नोक्तापत्तिः । तथा च परमाणुत्वादिभेदस्यापि तदन्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति हेतुतया पृथिवीत्वाद्युपलंभाभावस्य तादृशभेदकूटसहकृतस्यैव धर्मितावच्छेदकतासम्बन्धेन पृथिवीत्वाद्यभावप्रत्यक्षोत्पादप्रयोजकतया धर्मितावच्छेदकानिष्ठप्रत्यासत्त्या प्रतियोग्युपलंभाभावहेतुत्वेऽपि नोक्ताभावप्रत्यक्षापत्तिः । अथैवमपि अभावप्रत्यक्षे धर्मिभाने नियामकाभावेन जलत्वादि-

ना स्थूलजलादेरिव जलपरमाण्वादेरपि पृथिवीत्वाद्यभावधर्मितया भानं किं न स्यादिति चेत्–

न । पृथिवीत्वाद्यभावप्रत्यक्षस्य धर्म्यंशे लौकिकत्वनियमेन क्लृप्तलौकिकप्रत्यक्षहेतुमहत्त्वादिघटितलौकिकप्रत्यक्षसामग्र्या एव तन्नियामकतया जलपरमाण्वादेः पृथिवीत्वाद्यभावधर्मितयाऽभानादिति प्राहुरित्यलं विस्तरेण ।

अलौकिकसन्निकर्ष- विभागो लक्षणञ्च

अलौकिकसन्निकर्षस्त्रिविधः–सामान्यलक्षणा–ज्ञानलक्षणा–योगजधर्मभेदात् । तत्र सामान्यं लक्षणं स्वरूपं यस्या इति व्युत्पत्त्या चक्षुःसंयुक्तादिविशेष्यकचाक्षुषादिप्रकारीभूतघटत्वादिकमेव सामान्यलक्षणा । तथा च घटत्वादिप्रकारकयावद्घटविशेष्यकचाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयुक्तविशेष्यकचाक्षुषप्रकारीभूतघटत्वत्वादिना कारणत्वं पर्यवसन्नम् । अत्र कार्यतावच्छेदकसम्बन्धो विशेष्यत्वं कारणतावच्छेदकसम्बन्धः समवायादिः । एवं स्पार्शनादिस्थलेऽपि । न चैवं चक्षुःसंयुक्तघटविशेष्यकघटत्वप्रकारकचाक्षुषसत्त्वे घटत्वचाक्षुषप्रतिबन्धकीभूतदोषसत्त्वे घटत्वप्रकारकघटविशेष्यकचाक्षुषापत्तिः । एवं घटत्वप्रकारकचाक्षुषसत्त्वे घटत्वप्रकारकचाक्षुषसामग्रीविगमदशायामपीति वाच्यम् । चक्षुःसंयुक्तपदस्य चाक्षुषसामग्रीविशिष्टपरतया घटत्वप्रकारकयावद्घटविशेष्यकचाक्षुषत्वाद्यवच्छिन्नं प्रति घटत्वप्रकारकचाक्षुषसामग्रीविशिष्टविशेष्यकचाक्षुषप्रकारीभूतघटत्वत्वादिना हेतुत्वेऽनुपपत्त्यभावात् । अत्र घटत्वादिचाक्षुषासत्त्वे घटत्वादिबलाद्यावद्घटविशेष्यकचाक्षुषाद्यापत्तिवारणाय चाक्षुषप्रकारीभूतेति घटत्वादिविशेषणम् । सामान्यलक्षणाजन्यज्ञाने यावद्घटभानाय कार्यतावच्छेदके यावत्त्वनिवेशः । घटत्वप्रका-

रकचाक्षुषकाले द्रव्यत्वप्रकारकचाक्षुषवारणाय तत्र घटत्वप्रकारकत्वादिनिवेशः। न च विनिगमनाविरहेणैव यावद्घटभानोपपत्तौ कार्यतावच्छेदके यावत्त्वनिवेशे प्रयोजनाभाव इति वाच्यं, इष्टापत्तेः । न चैवमुपनीतभाने व्यभिचार इति वाच्यं विशेष्यतायां मुख्यत्वनिवेशात् । एवं लौकिकान्यत्वमपि निवेश्यम् । तेन निर्विकल्पकोत्तरोत्पन्नघटमुख्यविशेष्यकलौकिकप्रत्यक्षे न व्यभिचारः । न चैवमपि कारणतावच्छेदके ज्ञानप्रकारीभूतत्वेनैव सम्यक् किं चाक्षुषत्वादिनिवेशेनेति वाच्यम् । घटत्वप्रकारकचाक्षुषसामग्रीसमवधानकालीनघटत्वप्रकारकस्पार्शनसत्त्वे घटत्वप्रकारकयावद्घटचाक्षुषवारणाय तन्निवेशात्। एतेन लाघवाच्चाक्षुषप्रकारीभूतचाक्षुषसामग्रीविशिष्टवृत्तिघटत्वादेरेव घटत्वप्रकारकयावद्घटचाक्षुषादिहेतुत्वमस्तामित्यपि निरस्तम् । तथा सति घटत्वप्रकारकचाक्षुषसामग्रीसमवधानकालीनपटविशेष्यकघटत्वप्रकारकचाक्षुषाद्घटत्वप्रकारकघटाविशेष्यकचाक्षुषानुपपत्तेः ।

वस्तुतस्तु सामान्यस्य प्रत्यासत्तित्वे घटत्वत्वादेः कारणतावच्छेदकत्वे गौरवेण लाघवात्सामान्यज्ञानमेव प्रत्यासत्तिः । सामान्यं लक्षणं निरूपकं यस्या इति व्युत्पत्त्या सामान्यज्ञानस्यापि सामान्यलक्षणाशब्दार्थत्वसंभवात् । तथा च घटत्वादिप्रकारकघटादिनिष्ठलौकिकान्यमुख्यविशेष्यताशालिचाक्षुषत्वाद्यवच्छिन्नं प्रति चाक्षुषसामग्रीविशिष्टविशेष्यकघटत्वादिप्रकारकचाक्षुषत्वादिना हेतुत्वं समवायघटितसामानाधिकरण्यं च प्रत्यासत्तिः ।

यत्तु सामान्यस्य प्रत्यासत्तित्वे पुरुषभेदेन विषयभेदेन च कारणताबाहुल्यं, सामान्यज्ञानस्य प्रत्यासत्तित्वे च विषयभेदेनैवेति लाघवमिति सामान्यज्ञानं प्रत्यासत्तिरिति—

तदसत् । सामान्यस्य प्रत्यासत्तित्वेऽपि स्वप्रकारकचाक्षुषसमवायित्वादिसम्बन्धेन तस्य हेतुतया पुरुषभेदेन कारणताभेदाभावात् । अथ सामान्यस्य प्रत्यासत्तित्वे विषयभेदेन न कारणताबाहुल्यं लौकिकान्यमुख्यविशेष्यतासम्बन्धेन तत्पुरुषीयचाक्षुषादिकं प्रति चाक्षुषसामग्रीविशिष्टनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन तत्पुरुषीयचाक्षुषविशिष्टस्य समवायसम्बन्धेन हेतुत्वात् । सामान्यज्ञानस्य हेतुत्वे चोक्तरीत्या विषयभेदेन हेतुत्वे गौरवम् । पुरुषस्यापि विषयतया पुरुषापेक्षया विषयाणामाधिक्यादिति सामान्यस्य प्रत्यासत्तित्व एव लाघवमिति चेत्—

न । सामान्यज्ञानस्य हेतुत्वेऽपि लौकिकान्यमुख्यविशेष्यतानिरूपितप्रकारतासम्बन्धेन चाक्षुषं प्रति चाक्षुषसामग्रीविशिष्टनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन चाक्षुषस्य हेतुतया विषयानिवेशाभावात् । न च भवन्मते घटत्वप्रकारकचाक्षुषदशायां घटत्वप्रकारकयावत्पटादिविशेष्यकचाक्षुषापत्तिवारणाय विशिष्य घटादिविशेष्यनिवेश आवश्यक इति वाच्यम् । तर्हि सामान्यस्य प्रत्यासत्तित्वेऽपि प्रकारभाननियमार्थं विशिष्य प्रकारनिवेशस्यावश्यकतया साम्यात् । न चैवं विनिगमनाविरहः, चाक्षुषादेः कारणतावच्छेदकत्वकल्पनापेक्षया चाक्षुषत्वादिजातेः कारणतावच्छेदकत्वे लाघवस्यैव विनिगमकत्वात् । एवं सामान्यस्य प्रत्यासत्तित्वेऽतीतघटादिसामान्यप्रत्यासत्त्या यत्र तद्वत्तां प्रत्यक्षं तत्र कार्याव्यवहितपूर्वक्षणे सामान्याभावादगतिरिति सामान्यज्ञानमेव प्रत्यासत्तिः । न च तत्रागत्या स्वाश्रयीभूतघटवत्त्वरूपपरम्परासम्बन्धावच्छिन्नप्रकारताश्रयघटत्वस्यैव स्वाश्रयघटवत्त्वसम्बन्धेन तत्र हेतुता कल्प्यते । घटवत्वं चोपलक्षणतया सम्बन्धघटकमतो न दोष इति वाच्यम् ।

संयोगादिसम्बन्धेन घटादिप्रकारकभूतलादिविशेष्यकचाक्षुषादौ स्वाश्रयीभूतघटवत्त्वादिरूपपरम्परासम्बन्धेन घटत्वादिभाने प्रमाणाभावात् । तथाविधसम्बन्धेन घटत्वादेरभावग्रहदशायां संयोगादिसम्बन्धेन घटादिप्रकारकज्ञानोदयेन तत्सामग्र्यास्तत्सामग्र्यनियतत्वात् । न च सामान्यज्ञानस्य हेतुत्वेऽपि तत्रागतिरेव । अवच्छेद्याधिकरणासम्बद्धस्यानवच्छेदकतया प्रत्यक्षाव्यवहितपूर्वक्षणासम्बद्धातीतघटादौ तदवच्छेदेन प्रकारतासम्बन्धेन चाक्षुषादेरसत्त्वादिति वाच्यम् । आत्मनिष्ठप्रत्यासत्त्या तस्य हेतुतायामदोषात् । प्रकारतासम्बन्धेन हेतुत्वेऽपि प्रकृते कार्याव्यवहितपूर्वक्षणवृत्तिकारणसत्त्वस्यैव कार्योपधाने तन्त्रत्वाभ्युपगमेनाव्यवहितपूर्वक्षणवृत्तिचाक्षुषादेस्तेन सम्बन्धेन तत्राक्षततयाऽनुपपत्त्यभावात् । न चैवमपि तत्राव्यवहितपूर्वक्षणावच्छेदेन कारणासत्त्वाद्व्यभिचारो दुर्वार एवेति वाच्यम् । अव्यवहितपूर्वक्षणावच्छेदेन कारणाभावसत्त्वस्यैव व्यभिचारतया तत्र तदवच्छेदेन कारणस्येव कारणाभावस्याप्यसत्त्वेन व्यभिचारासम्भवात् । सामान्यस्य प्रत्यासत्तित्वे च कारणस्याव्यवहितपूर्वक्षणवृत्तित्वाभावेनोक्तरीत्याऽनिर्वाहादिति संप्रदायः ।

दीधितिकारानुयायिनां मते प्रत्यासत्तिविचारः

दीधितिकारानुयायिनस्तु निर्विकल्पकस्मरणादिसाधारणं सामान्यज्ञानमात्रं प्रत्यासत्तिः । तथा च घटत्वप्रकारकप्रत्यक्षत्वाद्यवच्छिन्नं प्रति घटत्वविषयकज्ञानादिनैव हेतुत्वम् । न चैवं घटत्वप्रकारकचाक्षुषसामग्र्यसत्त्वेऽपि घटत्वज्ञानाद्घटत्वप्रकारकचाक्षुषापत्तिरिति वाच्यम् । तत्तत्सामान्यलक्षणया तत्तदिन्द्रियजन्यतत्तत्प्रकारकप्रत्यक्षे जननीये तत्तदिन्द्रियजन्यतत्तत्सामान्यप्रकारकज्ञानसामग्र्यंतरस्यापि सहकारित्वाभ्युपगमात् । न चैवं गौरवमिति वाच्यं, द्रव्यलौकिक-

चाक्षुषत्वाद्यवच्छिन्नं प्रति क्लृप्तहेतुताकस्य चक्षुःसंयोगादेः सामान्यज्ञानादिघटितसामग्रीव्याप्तौ निवेशनातिरिक्तकारणत्वानङ्गीकारात्। अथैककारणविशिष्टापरकारणस्यैव सामग्रीव्याप्तौ निवेशेन चक्षुस्संयोगादेश्च सामान्यज्ञाने वैशिष्ट्यानिवेशासंभवेन कथं सामग्रीव्याप्तौ निवेशः? तथा हि—समवायादिघटितसामानाधिकरण्यसम्बन्धेन चक्षुःसंयोगादिवैशिष्ट्यं सामान्यज्ञाने निवेशयितुमशक्यम्। समवायसम्बन्धेन विषयनिष्ठस्य चक्षुःसंयोगादेस्तद्घटितसामानाधिकरण्यसम्बन्धेनात्मनिष्ठसामान्यज्ञानेऽसत्त्वात्। नाप्येककालीनत्वसम्बन्धेन तथा। पटे चक्षुःसंयोगादिदशायां घटत्वादिज्ञानबलाद्घटत्वादिप्रकारकपटचाक्षुषाद्यापत्तेः। न च घटत्वज्ञानादिघटितसामग्रीव्याप्तौ घटवृत्तिचक्षुःसंयोगादेर्निवेशान्नानुपपत्तिरिति वाच्यम्। तेन रूपेण चक्षुःसंयोगादेरहेतुतया सामग्रीव्याप्तौ तथानिवेशासम्भवात्। कारणतावच्छेदकावच्छिन्नस्यैव सामग्रीव्याप्तौ निवेशनियमादिति चेत्—

न। विषयतासमवायोभयघटितसामानाधिकरण्यसम्बन्धेन घटज्ञानादिविशिष्टचक्षुःसंयोगादेरेककालीनत्वसम्बन्धेन वैशिष्ट्यं घटत्वादिज्ञाने निवेश्यैव घटत्वज्ञानादिघटितसामग्रीव्याप्त्युपगमेन पटे चक्षुःसंयोगादिदशायां सति च घटत्वादिज्ञाने घटज्ञानादिविशिष्टचक्षुःसंयोगादेरेककालीनत्वसम्बन्धेन घटत्वज्ञानेऽसत्त्वे नोक्तापत्त्यभावात्। न चेदं घटज्ञानादौ विषयतासम्बन्धेन घटज्ञानादेर्हेतुत्व एव सम्भवति तत्रैव च मानाभाव इति वाच्यम्। पटादौ चक्षुःसंयोगादिकाले भिन्नविषयकानुमितिसामग्र्यभावरूपकारणबलादात्मनि घटादिविषयकचाक्षुषाद्यापत्तिवारणाय घटादिवृत्तिविषयतासम्बन्धेन घटादिज्ञानहेतुताया आवश्यकत्वात्। न चैतादृशहेतुतया कथमुक्तापत्तिवारणमितिवाच्यं, वि-

षयतासम्बन्धघटितसामानाधिकरण्यसम्बन्धेन घटज्ञानादिविशिष्ट-चक्षुःसंयोगादेरेककालीनत्वसम्बन्धेन भिन्नविषयकानुमितिसामग्र्यभावघटितसामग्रीव्याप्तौ विरोधिसामग्र्यभावे निवेशात्। न चैवमपि घटत्वप्रकारकयत्किञ्चिद्धटज्ञानेन जायमानं घटत्वप्रकारकयावद्धटविषयकं मानसमनुपपन्नम्। तत्र मनोजन्यघटत्वप्रकारकज्ञानोत्पादकसामग्र्यन्तरविरहादिति वाच्यम्। तत्रापि तथाविधज्ञानादिरूपज्ञानलक्षणात्मककारणघटितसामग्र्यन्तरस्य सम्भवादित्याहुः।

अत्र वदन्ति—उक्तरीत्या सामान्यज्ञानमात्रस्य प्रत्यासत्तित्वे लौकिकान्यतद्विषयताशालिप्रत्यक्षं प्रति तद्विषयकज्ञानत्वेन ज्ञानलक्षणाप्रत्यासत्तेर्हेतुत्वे मानाभावः। न च ज्ञानलक्षणाप्रत्यासत्तेरहेतुत्वे सुरभि चन्दनमित्यादौ सौरभत्वादिभानानुपपत्तिः। तदा सौरभत्वादिनिष्ठसौरभत्वत्वादेरनुपस्थित्या सामान्यलक्षणया तद्भानासम्भवादिति वाच्यम्। सौरभत्वत्वादेरनुपस्थितावपि तत्र सौरभत्वादिज्ञानरूपसौरभत्वादिप्रकारकप्रत्यक्षोत्पादकसामान्यलक्षणाप्रत्यासत्तिवशादेव सौरभत्वादिभाननिर्वाहात्। अथ सौरभत्वादिरूपेण सौरभादिविषयकसुरभि चन्दनमित्यादिप्रत्यक्षे उक्तरीत्या सौरभत्वादिभानसम्भवेऽपि सौरभत्वादिप्रकारकचन्दनादिविशेष्यकभ्रमात्मके प्रत्यक्षे सौरभत्वादिभानार्थं ज्ञानलक्षणायाः प्रत्यासत्तित्वमावश्यकम्। सौरभत्वादिज्ञानस्य सौरभत्वादिप्रकारकसौरभत्वाद्याश्रयविषयकप्रत्यक्षत्वस्यैव कार्यतावच्छेदकतया तस्मात्सौरभत्वाद्यनाश्रयचन्दनादिविशेष्यकसौरभत्वादिप्रकारकप्रत्यक्षासम्भवादिति चेत्—

न। सौरभत्वादिज्ञानकार्यतावच्छेदके सौरभत्वाद्याश्रयविषयकत्वानिवेशे प्रयोजनाभावेन तद्वशादेव तादृशभ्रमात्मक-

प्रत्यक्षसम्भवात् । एतेन रजतत्वादिना शुक्त्याद्युपनीतभानानुरोधेन ज्ञानलक्षणाया हेतुत्वान्तरमावश्यकम् । तत्र शुक्त्यादिवृत्तिधर्मज्ञानाभावेन सामान्यलक्षणयाऽनिर्वाहादित्यपि निरस्तम् । रजतत्वादिसामान्यज्ञानकार्यतावच्छेदके रजतत्वाद्याश्रयविषयकत्वानिवेशे प्रयोजनाभावेन रजतत्वादिसामान्यलक्षणयैव रजतत्वादिप्रकारकशुक्त्यादिप्रत्यक्षसम्भवात् । न चैवमियं च धर्मविषयकं ज्ञानं धर्मिणां प्रत्यासत्तिः । इतरा तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिः । अत एव सुरभि चन्दनमित्यादौ सौरभत्वादेरपि भानमिति दीधितिग्रन्थविरोध इति वाच्यं, तर्कनिर्णयेऽर्थे ग्रन्थविरोधस्य तार्किकैरनादरात् ।

अथ ज्ञानलक्षणाया अप्रत्यासत्तित्वे घटो नास्तीत्याद्यभावप्रत्यक्षेऽभावांशे घटादेर्भानासम्भवः । न च घटत्वादिज्ञानरूपसामान्यलक्षणयैव तत्संभव इति वाच्यम् । तया प्रत्यक्षे जननीये सामान्यप्रकारकप्रत्यक्षोत्पादकसामग्र्यन्तरस्यापेक्षणेन प्रकृते तदभावादिति चेत्—

न । यत्र घटसामान्यलक्षणया घटवतां भानं तत्र घटत्वप्रकारकघटादिप्रत्यक्षे घटत्वप्रकारकघटादिविषयकज्ञानत्वेनापि हेतुत्वस्य सामान्यलक्षणाविधया क्लृप्तत्वेन प्रकृते तादृशज्ञानादिघटितघटत्वादिप्रकारकप्रत्यक्षोत्पादकसामग्र्यन्तरस्य सम्भवात् । न च सामान्यलक्षणाविधया क्लृप्तकारणताकोक्तसामग्र्या सामग्र्यन्तरत्वासम्भव इति वाच्यं, प्रकृतसामान्यप्रत्यासत्त्यतिरिक्तसामग्र्या एव सामग्र्यन्तरपदेन विवक्षिततया तादृशघटादिज्ञानस्यापि घटत्वादिसामान्यलक्षणातिरिक्ततया सामग्र्यन्तरत्वसम्भवात् । एतेन घटत्वप्रकारकयत्किंचिद्घटज्ञानेन यत्र घटत्वप्रकारकयावद्घटाविषयकं मानसं तत्र तादृशसामग्र्यन्त-

रासम्भवः । ज्ञानलक्षणाया अप्रत्यासत्तित्वे तत्रापि तथाविध-घटज्ञानादिरूपज्ञानलक्षणात्मककारणघटितसामग्र्यन्तरं सम्भवतीत्यस्य वक्तुमशक्यत्वादित्यपि निरस्तम् । तत्राप्युक्तरीत्या सामान्यलक्षणाविधया क्लृप्तकारणताकघटत्वादिप्रकारकघटादि-विषयकज्ञानस्वरूपप्रत्यक्षोत्पादकसामग्र्या एव तादृशसामग्र्यन्त-रत्वसम्भवात् ।

यत्तु ज्ञानलक्षणाया अप्रत्यासत्तित्वे जातित्वादिरूपेण घट-त्वादिमुख्यविशेष्यकज्ञानकाले घटज्ञानाद्यसत्त्वेऽपि घटत्वा-दिना घटादिमुख्यविशेष्यकमानसोपनीतभानापत्तिरिति--

तदसत्, आपादकाभावात् । न च घटत्वादिज्ञानरूपसामान्य-लक्षणैवापादिकेति वाच्यं, तया फलजनने किञ्चिदंशे घटत्वादिप्र-कारकसामग्र्यन्तरस्य सहकारितया तदभावादिति ।

अत्रेदमवधेयम्-सामान्यलक्षणायाः प्रत्यासत्तित्व एवोक्त-रीत्या ज्ञानलक्षणायाः प्रत्यासत्तित्वखण्डनं सम्भवति तदेव न । सामान्यलक्षणाया एव प्रत्यासत्तित्वे मानाभावात् । अथ सामान्य-लक्षणाया अप्रत्यासत्तित्वे महानसीयधूमादौ व्याप्तिग्रहदशायां पर्वतीयधूमस्यासन्निकृष्टत्वेन तत्र व्याप्तिग्रहासम्भवेन परामर्शा-सम्भवादनुमित्यनुपपत्तिः । तत्त्वे च धूमत्ववह्नित्वसामान्यलक्ष-णाप्रत्यासत्त्या पर्वतीयधूमेऽपि पर्वतीयवह्निव्याप्तिग्रहसम्भवेन त-दुपपत्तिरिति तस्याः प्रत्यासत्तित्वमावश्यकमिति चेत्--

न । धूमव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारण्येन धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वस्यैव व्याप्तितया तस्य चैक्येन महानसीयधूमादौ तद्ग्रहदशायामेव विनापि सामान्यल-क्षणां पर्वतीयधूमेऽपि तद्ग्रहसम्भवात् । लाघवेन सकलधूमसा-धारणवह्न्यभाववदवृत्तित्वादेरेव व्याप्तित्वाच्च ।

यत्तु धूमो वह्निव्याप्यो न वेति संशयानुरोधेन सांगीकार्या अन्यथा प्रसिद्धधूमे व्याप्तिनिश्चयेनाप्रसिद्धे च धर्मिज्ञानाभावेन स न स्यात् । तदंगीकारे तु धूमत्वेन सकलधूमोपस्थितौ प्रसिद्धं विहायाप्रसिद्धे स उपपन्न इति--

तदसत् । प्रसिद्धधूम एव तद्धूमत्वादिना व्याप्तिनिश्चयेऽपि धूमत्वेन तत्संशयसंभवात् । न च व्याप्तिनिश्चयस्य प्रतिबन्धकस्य सत्त्वात्कथमेवमिति वाच्यं, समानधर्मितावच्छेदकनिर्णयस्यैव विरोधितयात्र धर्मितावच्छेदकभेदेन तदुत्पत्तौ बाधकाभावात् । धूमत्वं धर्मितावच्छेदकीकृत्य प्रसिद्धधूमे व्याप्तिनिश्चयसत्त्वे च तादृशसंशयोऽसिद्ध एव । यदपि सामान्यलक्षणायाः प्रत्यासत्तित्वाभावे पर्वतो वह्निमानित्याद्यनुमितेरनुपपत्तिः, विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतया तदनुमितिपूर्वं पर्वतीयवह्निरूपविशेषणज्ञानाभावात् । तदंगीकारे तु वह्नित्वसामान्यलक्षणया पर्वतीयवह्न्यादेरपि ज्ञानसत्त्वाददोष इति—

तदपि न । विशिष्टबुद्धौ विशेषणज्ञानहेतुत्वस्यैवासिद्धेः । विशेषणविशेष्येन्द्रियसन्निकर्षादित एव प्रत्यक्षात्मकस्य लिंगपरामर्शादनुमित्यात्मकस्य पदजन्यपदार्थोपस्थितेश्च शाब्दबोधात्मकस्य विशिष्टज्ञानस्य संभवात् । न च तादृशहेतुत्वाभावे विषयतासामान्यस्य सन्निकर्षजन्यतावच्छेदकतया निर्धर्मितावच्छेदकज्ञानीयप्रकारताकस्य कार्यतावच्छेदिकेति वाच्यम्, तस्यास्तत्प्रकारकप्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्र्याद्यभावस्यैव कार्यतावच्छेदकत्वात् ।

अथ विशिष्टबुद्धिप्रकारताया विशेषणज्ञानजन्यतानवच्छेदकत्वे भूतलं घटवदित्यादिविशिष्टबुद्धौ घटादेरेव प्रकारो न तु भूतलादेरित्यत्र किं नियामकम् । न च धर्मतैव तत्र नियामि-

केति वाच्यं, धर्मिणोऽपि कदाचिद्विधेयतया धर्मांशे प्रकारतया तस्यानियामकत्वासंभवादिति चेत्--

न । युगपदुभयसन्निकर्षकाले द्वयोर्ज्ञानेऽप्येकतरमात्रप्रकारकज्ञानोदयेन विशेषणज्ञानस्यापि तन्नियामकत्वासंभवात् ।

केचित्तु विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वकल्पने उपनीतभाने ज्ञानलक्षणासन्निकर्षस्य स्वातंत्र्येण हेतुत्वं न कल्प्यते । उपनीतस्य विशेषणतानियमेन तज्ज्ञानासत्त्वे विशेषणज्ञानरूपकारणाभावादेवोपनीतभानोत्पत्त्यसंभवात् । न च मानसे सुरभि चन्दनमित्याद्युपनीतचन्दनादिमुख्यविशेष्यकज्ञाने तथानियमाभावेन तदनुरोधेन ज्ञानलक्षणायाः स्वातंत्र्येण हेतुत्वमावश्यकमिति वाच्यं, तत्रापि विषयितया उपनायकज्ञानांशे तादात्म्येन स्वांश एव वा विशेषणतयाऽपि तज्ज्ञानोपगमात् । प्रकारतान्यविशेष्यतारूपाया मुख्यविशेष्यतायास्तत्प्रकारकज्ञानेऽपि सत्त्वेनाविरोधेन तादृशज्ञानस्य चन्दनादिमुख्यविशेष्यकत्वोपपत्तेः ।

अस्तु वा चन्दनादिमानसे तद्विषयकज्ञानसन्निकर्षस्य हेतुत्वान्तरं तथापि विशिष्टबुद्धौ विशेषणज्ञानहेतुतावादिनो बहिरिन्द्रियजन्योपनीतभाने तद्धेतुत्वान्तराकल्पनेन लाघवमस्त्येव । न च मानसस्थले चन्दनादिविषयकालौकिकप्रत्यक्षत्वस्यैव जन्यतावच्छेदकत्वोपगमेन बहिरिंद्रियस्थले हेतुत्वान्तरं न केनापि कल्प्यत इति वाच्यं, आलौकिकत्वस्य प्रत्यक्षत्वस्य च जन्यतावच्छेदकत्वे तादृशधर्मयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताद्वयस्यावश्यकत्वात् । अवच्छेदकगौरवस्याधिक्यात् । मानसत्वस्य तथात्वे वह्निविषयकलौकिकमानसाप्रसिद्ध्या तद्विषयकज्ञानजन्यतावच्छेदकेऽलौकिकत्वानिवेशादिति वदन्ति--

तदसत् । अनुमितिसामग्रीरूपप्रतिबन्धकसत्त्वेऽसत्यां तत्प्र-

कारकमानसेच्छायां तद्विशेष्यकमानसेच्छाबलात्तदप्रकारकस्यापि मानसस्योत्पत्तेः। विषयनिष्ठप्रत्यासत्त्यैवोपनीतभानज्ञानलक्षणा-सन्निकर्षयोर्लाघवेन हेतुहेतुमद्भावकल्पनेन सुखादिलौकिकमान-सव्यावर्तनायालौकिकत्वनिवेशस्यावश्यकतया मानसत्वं परि-त्यज्य प्रत्यक्षत्वस्यैव मानसस्थलीयकार्यतायामवच्छेदकत्वसं-भवाच्च।

वस्तुतस्तु विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वेऽप्यनुमित्या-दौ परामर्शादेरेव नियामकतया प्रत्यक्षत्वस्यैव कार्यतावच्छेदक-घटकत्वेनाज्ञातस्यानुमितौ प्रकारतया भाने न कोऽपि दोष इति विनैव सामान्यलक्षणामुपपत्तिः। न च लाघवात्तत्प्रकारक-त्वमात्रमेव तज्ज्ञानजन्यतावच्छेदकम्। अस्तु च स्मरणे व्यभि-चारवारणाय तत्पूर्वं निर्विकल्पकस्मरणकल्पनम्। तथा च सामा-न्यलक्षणायाः प्रत्यासत्तित्वमावश्यकम्। लाघवबलासिद्धाया अ-नुमित्यादिसाधारणविशेषणज्ञानजन्यताया निर्वाहाय परामर्शा-दीनां यावद्वह्न्यादिविषयकत्वस्य तन्नियामकसामग्र्या निर्विक-ल्पकस्मरणादेश्च कल्पनया गौरवस्य फलमुखत्वेनादोषत्वादि-ति वाच्यम्, इष्टतावच्छेदकप्रकारकज्ञाननाशेऽपि तत्प्रकारकफ-लविषयकप्रवृत्त्युत्पादेन तत्र व्यभिचारापत्तेः, प्रकारताविषय-तयोः कार्यकारणभावघटकप्रत्यासत्तितोपगमात्प्रकारतायाः का-र्यतावच्छेदकत्वस्यानावश्यकत्वेन प्रत्यक्षत्वस्यैव तथात्वाच्च। अ-धिकमग्रे वक्ष्यामः।

एतेन विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकवि-शेषणधियो हेतुत्वाद्वह्नित्वादिना पर्वतीयवह्न्यादिज्ञानं विनाऽनु-मितौ वह्नित्वादिविशिष्टतत्तद्वह्न्यादिवैशिष्ट्यभानं नोपपद्यते। न च विशेषणतावच्छेदकप्रकारकज्ञानहेतुतायां विशेषणविषयकत्वा-

निवेशान्न दोष इति वाच्यम् । तथापि स दण्डसंयोगवानित्यनुमितावपूर्वदण्डादिरूपविशेषणतावच्छेदकविशिष्टवैशिष्ट्यभानार्थं सामान्यलक्षणांगीकार आवश्यक इत्यपि परास्तम् । तत्कार्यतावच्छेदकेऽपि प्रत्यक्षत्वस्यैव निवेशात् । अनुमित्यादौ परामर्शादेरेव नियामकत्वात् । न चैवमभावसाध्यकेऽप्यप्रसिद्धसाध्यविशेष्यकानुमित्युच्छेदप्रसङ्गः । साध्यतावच्छेदकप्रकारकज्ञानासत्त्वेपि तद्विशिष्टवैशिष्ट्यस्यानुमितौ भानसंभवादिति वाच्यं, इष्टत्वात् । वस्तुतो विशेषणान्तरदण्डत्वाद्यवच्छिन्नविशेषणतावच्छेदकताकबोधे दण्डत्वादिना किञ्चिद्व्यक्तिप्रकारकज्ञानमेव कारणम् । न तु तद्दण्डादिरूपविशेषणतावच्छेदकविशिष्टानां विशिष्य तत्र निवेशः प्रमाणाभावात् । तथा चानुमितिसाधारणधर्मस्य विशेषणतावच्छेदकप्रकारकधीजन्यतावच्छेदकत्वेऽपि न सामान्यलक्षणप्रत्यासत्तिसिद्धिरिति ।

अथाभावज्ञाने प्रतियोगिज्ञानस्य हेतुतया घटादिसामान्याभावभानार्थं सामान्यलक्षणासिद्धिः । यावतां घटादीनामेव तत्प्रतियोगितया तज्ज्ञानस्यावश्यकत्वादिति चेत् —

न । प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानत्वेनैवाभावप्रत्यक्षहेतुतया घटत्वादिप्रकारकयत्किंचिद्घटादिज्ञानादेव समान्याभावभानसंभवात् । न च तथापि सामान्याभावभानाभावे प्रतियोगितया यावत्प्रतियोगिभानेन तदर्थं सांगीकार्येति वाच्यं, तत्रोपस्थितप्रतियोगिन एव प्रतियोगितया भानेन यावत्प्रतियोगिभानानंगीकारात् ।

दीधितिकृदनुयायिनस्तु अभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वमेवासिद्धम् । न चैवं प्रतियोगिज्ञानशून्यकालेनेत्याकारकप्रत्यक्षापत्तिरिति वाच्यं, अभावप्रत्ययस्य विशिष्टवैशिष्ट्यविषयता-

शालित्वानियमेन तादृशविषयताशालिबोधे विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया घटत्वादिप्रकारकज्ञानस्य हेतुतायाः क्लृप्तत्वेनेन्द्रियसम्बद्धविशेषणतया फलजनने तस्य सहकारितयोक्तापत्त्यभावात् । न चैवं पटत्वादिप्रकारकज्ञानदशायां घटाभावादाविन्द्रियसम्बद्धविशेषणतयाऽभावप्रत्यक्षापत्तिः । घटत्वादिप्रकारकज्ञानं विनापीन्द्रियसम्बद्धविशेषणतया पटत्वादिप्रकारकज्ञानसहकारेण पटाद्यभावप्रत्यक्षजननेन घटत्वादिप्रकारकज्ञानविरहस्याकिंचित्करत्वादिति वाच्यं, प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानत्वेन पृथक्कारणत्वेऽप्युक्तापत्तेर्दुवारत्वात् । न चेन्द्रियसम्बद्धविशेषणताया घटाभावादिभेदेन हेतुताभेदेन घटाभावादिनिष्ठेन्द्रियसम्बद्धविशेषणतया घटाभावादिप्रत्यक्षजनने घटत्वादिप्रकारकज्ञानस्य सहकारित्वान्न पृथक्कारणतामते उक्तदोष इति वाच्यम्, ममाप्येवं सुवचत्वादित्याहुः—

तच्चिन्त्यम् । अभाववृत्तिलौकिकविषयतया प्रत्यक्षे स्वप्रकारीभूतधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन ज्ञानत्वेनैव प्रतियोगिज्ञानस्य पृथक् हेतुतयेन्द्रियसम्बद्धविशेषणतया फलजनने तेन सम्बन्धेन ज्ञानत्वावच्छिन्नस्य सहकारित्वोपगमे नोक्तापत्त्यभावात् । न चोक्तरीत्या प्रतियोगिज्ञानस्य हेतुत्वे पटत्वादिप्रकारकज्ञानसत्त्वे दोषेण घटाभावादौ प्रतियोगितया पटाद्यवगाहिप्रत्यक्षे व्यभिचार इति वाच्यम् । कार्यतावच्छेदके स्वाव्यवहितोत्तरत्वोपदर्शितकार्यताकारणतावच्छेदकसम्बन्धघटितसामानाधिकरण्योभयसम्बन्धेन ज्ञानत्वावच्छिन्नरूपकारणवैशिष्ट्यनिवेशनाद्दोषात् । न चैवमिन्द्रियसम्बद्धविशेषणतया फलजनने ज्ञानत्वावच्छिन्नस्य सहकारित्वासंभवः । उक्तस्थल एव तं विनापि फलजननादिति वाच्यम् । तया फलजनने पटत्व-

प्रकारकज्ञानादिविशिष्टदोषघटित(१)सामग्र्युपदर्शितज्ञानविशिष्टोत्पादकज्ञानत्वावच्छिन्नघटितसामग्र्योरन्यतरस्य सहकारित्वेनादोषात् ।

नवीनास्तु प्रतियोगिज्ञानस्य स्वातन्त्र्येणाभावप्रत्यक्षे हेतुत्वेऽपि अभावत्वं धर्मितावच्छेदकीकृत्य घटादिप्रकारकभानविरोध्यभावो न घटीय इत्यादिबाधनिश्चयादिसत्त्वे प्रतियोग्यमिश्रितत्वेनेत्याकारकाभावप्रत्यक्षापत्तिर्दुर्वारैव । प्रतियोगिज्ञानसत्त्वेऽपि न प्रतिबन्धकवशेनाभावांशे प्रतियोगिभानासंभवात् ।

नन्वभावत्वं धर्मितावच्छेदकीकृत्य घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटादिभानप्रतिबन्धिका । अभावत्वावच्छेदेन घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रकारिका निश्चयात्मकबुद्धिरेव तस्याश्चासंभवः । सा त्वभावत्वावच्छिन्ने घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटादिविशेषितमभावमवगाहिष्यते । तदवगाहने चाभावत्वविशिष्टे उक्तसम्बन्धान्तर्गततया घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वस्य घटादिसम्बन्धतया भानमावश्यकम् । तस्य च भानं न संभवति । तज्ज्ञानविरोधिनोऽभावत्वावच्छेदेन स्वात्मकतत्सम्बन्धावच्छिन्नाभावनिश्चयस्य कार्यकाले सत्त्वात् । भिन्नधर्मिकत्वेऽपि समानप्रकारकज्ञानस्य प्रतिबन्धकत्वात् । न च भूतलादौ संयोगसम्बन्धावच्छिन्नघटाभावनिश्चयसत्त्वेऽपि संयुक्तसंयोगसम्बन्धेन घटप्रकारकज्ञानोत्पत्त्या शुद्धतत्सम्बन्धावगाहि विशिष्टबुद्धावेव तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावनिश्चयस्य प्रतिबन्धकत्वमुपेयम् । तथा चाभावत्वावच्छेदेनोक्ताभावनिश्चयद-

(१) दोषविशिष्टपटत्वप्रकारकज्ञानादघटितेति 'ख' पुस्तकपाठः ।

शायामपि अभावत्वविशिष्टे घटत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्नत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकत्वस्य संसर्गतया भाने बाधकाभाव इति वाच्यं, तत्सम्बन्धावच्छिन्नाभावग्रहप्रतिबध्यतावच्छेदककोटौ शुद्धतत्संसर्गावगाहित्वानिवेशे संयोगादिसम्बन्धावच्छिन्नाभावनिश्चयदशायां धर्मितावच्छेदकादिव्यापकत्वादिविशिष्टसंयोगादिसम्बन्धेन विशिष्टबुद्ध्यापत्तेर्विशेषणधर्म्युभयविषयतानिरूपिततत्तत्सम्बन्धीयसांसर्गिकविषयताया एव तत्सम्बन्धावच्छिन्नाभावग्रहप्रतिबध्यतावच्छेदकत्वोपगमात् । न तु शुद्धतत्सम्बन्धीयसांसर्गिकविषयतायाः परंपरासम्बन्धस्थले च विशेषणधर्म्युभयविषयतानिरूपितसांसर्गिकविषयतयोर्भेदनोक्तानुपपत्तिविरहादिति चेत्—

मैवम् । अभावांशे घटादिरूपप्रतियोगिभानप्रतिबन्धकस्याभावः प्रतियोगितासम्बन्धेन घटाभाववानित्यादिनिश्चयस्योक्तरीत्याऽसंभवेऽपि अभावः प्रतियोगितासम्बन्धेन घटवतो भिन्न इत्याद्याकारकस्तत्प्रतिबन्धकनिश्चयः सम्भवत्येव । तस्याभावत्वविशिष्टे प्रतियोगितासम्बन्धेन घटाद्यप्रकारकत्वात् । एवं चोपदर्शितापत्तिवारणाय प्रतियोगिज्ञानहेतुतावादिनापि प्रतियोगिप्रकारतानिरूपितविशेष्यतान्यविषयतासम्बन्धेन प्रत्यक्षं प्रत्यभावभेदस्य हेतुत्वमवश्यमुपेयम् । तथा च तेनैव प्रतियोगिज्ञानशून्यकालेऽपि प्रतियोग्यमिश्रितनेत्याकारकप्रत्यक्षवारणसम्भवे प्रतियोगिज्ञानस्याभावप्रत्यक्षे हेतुत्वमप्रामाणिकमेव । न च तत्तद्व्यक्तित्वप्रमेयत्वादिनाऽभावप्रत्यक्षे व्यभिचारेणोक्तकारणताया असम्भव इति वाच्यम्, तत्तद्व्यक्तित्वादिप्रकारतानिरूपितविशेष्यतान्यत्वस्यापि सम्बन्धघटकविषयतायां निवेशात् । गौरवस्यानापत्त्या प्रामाणिकत्वेनादोषत्वादिति प्राहुः ।

अन्ये तु प्रतियोग्यमिश्रिताभावप्रत्यक्षे इष्टापत्तिः । अत एव शून्यमितिप्रत्ययोपि सङ्गच्छते । एवं च प्रतियोगिज्ञानस्य हेतुत्वे मानाभाव इत्याहुरिति दिक् ।

अथ कपाले घटो भविष्यतीत्यादिप्रत्यक्षं प्रतियोगिविशेषितप्रागभावविषयकं सर्वसिद्धम् । न च प्राचीनास्तत्प्रतियोगिनः किं त्वनागता इति सामान्यलक्षणया तज्ज्ञानं विना न तादृशप्रत्यक्षसम्भव इति सामान्यलक्षणासिद्धिः । प्रतियोगिज्ञानस्याभावप्रत्यक्षाहेतुत्वेऽपि प्रतियोग्यंशे सन्निकर्षान्तरभावेन तज्ज्ञानस्यैव संनिकर्षत्वेनापेक्षणादिति चेत्–

मैवम् । उत्पत्स्यते भविष्यतीत्यादेः समानार्थकत्वेन घटो भविष्यतीत्यस्य वर्त्तमानकालोत्तरकालोत्पत्तिको घट इत्यर्थः । तथा च तत्र प्रागभावास्पर्शनेनोक्तज्ञानस्य प्रागभावप्रत्यक्षत्वमिति सामान्यलक्षणासिद्ध्यनवकाशात् । अथैवं जातो घट इत्यादिप्रत्ययवदुत्पन्नो घट ध्वंस इत्यादिप्रत्ययबलादतिरिक्तध्वंससिद्धावपि प्रागभावे मानाभावः । न च घटाद्युत्पादकाले घटो नास्तीत्यादिबुद्धेः प्रागभावविषयकत्वेन तत्सिद्धिरिति वाच्यं, तस्या अत्यन्ताभावविषयकत्वेनैवोपपत्तेः । न च प्रागभावघटितपूर्वत्वतत्पूर्वत्वादिव्यवहारानुरोधेन तत्सिद्धिरिति वाच्यं, तस्यातीतकालवृत्तित्वतदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वादिविषयकत्वात् । न चोत्पन्नस्य पुनरुत्पादवारणाय जन्यमात्रे प्रागभावस्य हेतुतया तत्सिद्धिरिति वाच्यम् । सामग्र्याः कार्यव्याप्यत्वोपगमेनोत्पत्तेश्चाद्यक्षणसामग्रीप्रयोज्यत्वोपगमेनोत्पन्नपुनरुत्पादापत्त्यसंभवात् । अत एव कार्यादेः कालदेशनियमानुरोधेन तत्सिद्धिरित्यपास्तम् । क्लृप्तयोः कालदेशयोर्विशिष्य हेतुतयैव तन्निर्वाहात् ।

यत्तु तदुत्पत्तिस्तस्याद्यक्षणसम्बन्धः । आद्यत्वं च तदधि-
आद्यलक्षणम् करणक्षणवृत्तिप्रागभावाप्रतियोगित्वम् । तत्पदं चोत्प-
त्तिमत्त्वेनाभिमतघटादिपरम् । अस्ति च घटादेराद्यक्षणे घटाद्य-
धिकरणक्षणवृत्तिप्रागभावाप्रतियोगित्वम् । आद्यक्षणोत्पत्तिक-
लत्वादिसम्बन्धवारणाय क्षणेति । न चेदं चरमध्वंसात्मकमहाप्र-
लयोत्पत्तावव्याप्तं, महाप्रलयाधिकरणक्षणवृत्तिप्रागभावाप्रसिद्धे-
रिति वाच्यं, महाप्रलयानंगीकारात् ।

यद्वा तदधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वमाद्यत्वम् ।
अस्ति च महाप्रलयाधिकरणक्षणावृत्तिप्रागभावप्रतियोगित्वं ध्वं-
समात्रे तत्सम्बन्धो महाप्रलयस्योत्पत्तिः । अथैवं घटादिद्विती-
यक्षणोत्पत्तिकध्वंसमादाय तत्सम्बन्धरूपे द्वितीयादिक्षणसम्ब-
न्धेऽतिव्याप्तिः । ध्वंसप्रागभावस्य प्रतियोगिरूपत्वस्येव प्रतियो-
गिप्रागभावरूपत्वस्यापि सर्वसंमतत्वेन तादृशध्वंसस्यापि घटाद्य-
धिकरणक्षणावृत्तिस्वप्रतियोगिप्रागभावात्मकस्वप्रागभावप्रतियो-
गित्वादिति चेत्--

न । ध्वंसप्रागभावस्यातिरिक्तत्वांगीकारेण तादृशध्वं-
सप्रागभावस्य घटाद्यधिकरणक्षणावृत्तित्वाभावात् । तस्या-
नतिरिक्तत्वे च तदधिकरणक्षणावृत्तिस्वप्रतियोगिकप्रागभाव-
सामान्यप्रतियोगित्वरूपस्याद्यत्वस्य विवक्षणेन तादृशध्वंसस्य
प्रतियोगिरूपस्य प्रागभावस्य घटाद्यधिकरक्षणवृत्तितया न दोषः ।
एवं चोत्पत्तेः प्रागभावघटिततया प्रागभावासिद्धिरिति—

तदसत् । महाप्रलयानंगीकारे तदधिकरणसमयध्वंसा-
धिकरणत्वस्य तदंगीकारे च तदधिकरणसमयावृत्तिस्ववृत्तिध्वं-
सप्रतियोगित्वसामान्यकत्वस्याद्यत्वरूपतया तद्वत्समयसम्बन्ध-
स्यैवोत्पत्तिमत्त्वात् । भवति हि तदीयाद्यक्षणवृत्तिध्वंसप्रतियो-

गित्वं तदधिकरणसमयावृत्ति न तु तद्वृद्वितीयादिक्षणवृत्तिध्वंसप्रतियोगित्वम् । तस्याद्यक्षणादिवृत्तित्वात् । अत एवाद्यक्षणोत्पत्तिकलवादिव्युदासः । यदपि महाप्रलयानंगीकारे विभागप्रागभावावच्छिन्नं कर्मत्वं क्षणत्वं तदंगीकारे तु स्ववृत्तिप्रतियोगिकप्रागभावानधिकरणसमयत्वं स्वावृत्तिप्रागभावसामान्यकत्वस्ववृत्तियावत्पदार्थविशिष्टसमयत्वं वा क्षणत्वम् । एवं च प्रागभावसिद्धिरर्थायातैवेति—

क्षणलक्षणम्

तदप्यसत् । स्ववृत्तिप्रतियोगिकध्वंसानधिकरणसमयत्वस्यैव प्रागभावघटितस्य क्षणत्वस्य सुवचत्वात् । एवं क्षणिकत्वेनाभिमतमन्त्यशब्दादि ।

नन्वन्त्यशब्दस्याप्युपान्त्यशब्दनाशेनैव नाशे क्षणिकत्वानंगीकारेण प्रागभावाघटितं क्षणत्वमुक्तमसंभवीति चेत्—

अत्र केचित्—क्षणिकपदार्थानंगीकारे स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वं स्ववृत्तियावदभावविशिष्टसमयत्वं वा क्षणत्वम् । एवं क्रियादि । तद्वृत्तयो यावन्तो ध्वंसास्तद्वैशिष्ट्यं क्रियादेर्विनाश्यता क्षणेऽस्ति । प्रतिक्षणं कस्यचिन्नाशेन क्रमिकध्वंसचतुष्टयादिवैशिष्ट्यस्य तत्रैव संभवात् ।

यद्वा स्वपूर्ववर्तिस्ववृत्तियावत्पदार्थविशिष्टसमयत्वं तत्त्वम् । स्वपूर्ववर्ती सन् स्ववृत्तिर्यावान् पदार्थस्तद्विशिष्टसमयत्वमित्यर्थः । इदमुत्पद्यमानक्रियादावस्ति । महाप्रलयातिरिक्तक्षणाव्याप्तिवारणाय स्वपूर्ववर्तीति । स्वपूर्ववर्तियावत्पदार्थवैशिष्ट्यस्यासंभवात्तस्त्वन्वृत्तीति । अत एव घटोत्पत्तिक्षणे घटसामग्रीक्षणो नश्यति घटसामग्रीनाशक्षणे घटोत्पत्तिक्षणो जायते इत्यादिव्यवहारोपपत्तिः । विनश्यद्वस्तूत्पद्यमानक्रिययोः क्षणत्वात् । न चैवं घटोत्पत्तिक्षणे घटसामग्री, घटसामग्रीक्षणे घट इत्यादिकं स्यात् ।

विनश्यदवस्थकर्मादेः प्रागुत्पद्यमानस्य चाग्रे सत्त्वादिति वाच्यम् । स्ववृत्तियावद्ध्वंसवैशिष्ट्यावच्छेदेन स्वपूर्ववर्तियावत्पदार्थवैशिष्ट्यावच्छेदेन तत्तद्वृत्तित्वस्यैव तत्तत्क्षणवृत्तित्वरूपत्वात् ।

अथ चरमलक्षणे स्वपूर्वत्वं स्वोत्पत्तिकालीनध्वंसप्रतियोगित्वमिति क्षणत्वमुत्पत्तिघटितमुत्पत्तिश्च क्षणत्वघटितेत्यन्योन्याश्रयो दुर्वार इति चेत्—

न । स्वाधिकरणयावत्कालवृत्तिध्वंसप्रतियोगित्वस्य स्वपूर्वत्वरूपत्वात् । न च विनश्यदवस्थोत्पद्यमानक्रिययोरभावे क्षणव्यवहारो न स्यात् । प्रतिक्षण कर्मोत्पद्यते विनश्यतीति नियमे मानाभावादिति वाच्यं, जन्यमात्रस्य कालोपाधित्वेनादोषात् । प्रतिक्षणं किंचिदुत्पद्यते किञ्चिद्विनश्यतीति नियमांगीकारात् । इत्थं च महाप्रलयतदव्यवहितपूर्वक्षणयोरपि नानुपपत्तिः । चरमध्वंसोपान्त्यध्वंसयोरेव तदधिकरणक्षणत्वादित्याहुः ।

नव्यास्तु स्ववृत्तिचरमध्वंसवैशिष्ट्यमेव विनश्यदवस्थक्षणवृत्तित्वेऽवच्छेदकत्वोत्पत्तिकाले विनश्यदवस्थपदार्थवैशिष्ट्यमेवोत्पद्यमानक्षणवृत्तित्वेऽवच्छेदकं विशेषणविशेष्योभयवृत्तित्वम् । विशिष्टवृत्तित्वं चेत्तथापि यावत्त्वप्रवेशे गौरवम् । यावदभावेत्यत्र यावत्पदार्थेत्यत्र च नित्यस्यापि प्रवेशान्न तद्वैशिष्ट्यसंभव इति प्रागुक्तलक्षणमयुक्तम् । तस्मात् स्ववृत्तिध्वंसप्रतियोगिवृत्तिपदार्थविशिष्टसमयत्वं विनश्यदवस्थे । स्वाधिकरणसमयध्वंसावृत्तिपदार्थविशिष्टसमयत्वं चोत्पद्यमाने क्षणत्वं तत्तत्पदार्थवैशिष्ट्यस्य तत्कालस्य चावच्छेदकत्वात्, तत्तत्पदार्थस्य विशेषणत्वसंभवाच्च । इत्थं च घटसामग्रीक्षणवृत्तित्वं न घटे इत्यादि वाक्यप्रामाण्यं सुघटम् । क्षणद्वयादिवृत्तित्वव्यवहारश्च क्रमिकक्षणद्वयादिवृत्तित्वनिबन्धन इति प्राहुरिति चेत्—

नैवम् । प्रागभावानंगीकारे क्षतिविरहेण प्रागभावासिद्धा-विष्टापत्तिरिति दीधितिकारानुयायिनः ।

नवीनास्तु केवलनीलाद्यवयवारब्धे चित्ररूपापत्तिवारणाय चित्रत्वावच्छिन्नं प्रति षडभावहेतुत्वापेक्षया चि-त्रप्रागभावस्यैकहेतुता कल्पने लाघवादिति प्राग-भावासिद्धिः । एवं प्रागभावानङ्गीकारेऽनुमितिसामग्र्यादीनां सिद्ध्यभावबाधाभावादिविशिष्टपरामर्शत्वादिना प्रतिबन्धकता वाच्या । तत्र च तादृशस्तोमस्य विशेष्यविशेषणभावे विनिगम-नाविरहेण प्रतिबन्धकताबाहुल्यमिति गौरवम् । तदङ्गीकारे च सिद्ध्यभावबाधाभावपरामर्शादिकमनिवेश्य स्ववृत्तिप्रतियोगिकत्व-सम्बन्धेन कृतिविशिष्टानुमितिप्रागभावत्वादिनैव प्रतिबन्धकता-कल्प्यत इति लाघवम् । तादृशसम्बन्धेन कृतिविशिष्टः सन् प्रा-गभावः प्रतियोग्यव्यवहितपूर्वक्षण एव वर्त्तत इति नानुपपत्ति-रिति प्रागभावसिद्धिरावश्यकीति प्राहुः । अधिकमन्यत्र मत्कृतौ द्रष्टव्यम् ।

नवीनमते प्राग-भावसिद्धिः ।

अथ तथापि सामान्यलक्षणावश्यकी । अन्यथा भाविनि पाकसुखादाविच्छा न स्यात् , सिद्धे इच्छाविरहात् । असिद्धस्य च तस्याज्ञानादिति चेत् —

न । ज्ञानेच्छयोः समानप्रकारकत्वेनैव कार्य्यकारणभावो लाघवान्न तु समानविशेष्यकत्वेनापि गौरवादिति पाकत्वादिना सिद्धपाकादिज्ञानादेवासिद्धपाकादाविच्छासम्भवात् । अयं का-लः पाकादिकालीनध्वंसप्रतियोगी कालत्वादतीतकालवदित्यनु-मानेन भाविपाकादिज्ञानस्य सुकरत्वाच्चेति दिक् ।

तस्मात् सामान्यलक्षणाया एवासिद्ध्या सामान्यलक्षणयैव

निर्वाहे ज्ञानलक्षणायाः प्रत्यासत्तित्वे मानाभाव इति रिक्तं वच इति ध्येयम् ।

यत्तु सामान्यलक्षणेव ज्ञानलक्षणापि न प्रत्यासत्तिः । भ्रमादिस्थले संनिकर्षान्तररहितानां विशेष्यावृत्तिरजतत्वादीनां प्रत्यक्षे भानानङ्गीकाराद्‌संसर्गाग्रहसहिताद्ग्रहणस्मरणात्मकज्ञानद्वयादेव प्रवृत्त्यापत्तेरिति प्राभाकरमतम्—

प्राभाकरमते सामान्यलक्षणेव ज्ञानलक्षणाऽपि न प्रत्यासत्तिः तत्खण्डनम्

तत्तु अन्यथाख्यातिप्रघट्टक एव । विशिष्टज्ञानस्यैव प्रवृत्त्यादिकार्योपपादकत्वव्यवस्थापनेन दूषितम् ।

केचित्तु ज्ञानलक्षणानङ्गीकारे व्याप्त्यंशे सन्निकर्षान्तराभावेन वह्निव्याप्यधूमवान् पर्वत इत्यादिविशिष्टपरामर्शासम्भवेनानुमित्यनुपपत्तिरिति तत्सिद्धिः ।

यत्तु प्राभाकरैरुक्तं–सम्भवतीदं विशिष्टपरामर्शस्यानुमितिहेतुत्वोपगमे तदेव न व्याप्तिप्रकारकज्ञानत्वेन पक्षधर्मताज्ञानत्वेन चानुमितिहेतुतया धूमो वह्निव्याप्यो धूमवान् पर्वत इतिज्ञानद्वयादेवानुमित्युपपत्तेः । न चैवमालोको वह्निव्याप्यो धूमवान् पर्वत इतिज्ञानद्वयादप्यनुमित्यापत्तिरिति वाच्यं, समानप्रकारकज्ञानद्वयस्यानुमितिहेतुत्वोपगमेनादोषात् । अथैवं द्रव्यत्वादिसामानाधिकरण्येन वह्न्यादिव्याप्तिज्ञानकाले ह्रदादौ द्रव्यत्वादिना जलादिमत्ताज्ञानाद्ध्रदादौ वह्न्याद्यनुमितेर्दुर्वारतया भवतां कारणबाधेनान्यथाख्यातिनिराकरणानुपपत्तिः । न च पक्षभेदेन कार्यकारणभावभेदाद्ध्रदादिरूपपक्षमन्तर्भाव्य वह्न्याद्यनुमितौ पक्षधर्मताज्ञानस्य हेतुत्वाकल्पनान्नोक्तदोष इति वाच्यं, लाघवेन पक्षविशेषमनन्तर्भाव्यैव समानविशेष्यताप्रत्यासत्त्या हेतुत्वकल्पनादिति चेत्—

न । यद्रूपावच्छेदेन व्याप्तिज्ञानं तद्रूपेण पक्षधर्मताज्ञानस्यानु-

मितिहेतुत्वोपगमेनातिप्रसक्तद्रव्यत्वादेर्व्याप्यतानवच्छेदकतयाऽन्यथाख्यातिमनङ्गीकुर्वतां तदवच्छेदेन व्याप्तिग्रहासम्भवेन तेन रूपेण ह्रदादौ जलादिमत्ताज्ञानादनुमित्यापत्त्ययोगात् । न चैवमालोको धूमो वा उभयथापि वह्निव्याप्य इति ज्ञानदशायां धूमालोकान्यतरत्वादिना पक्षधर्मताज्ञानादनुमित्यनुपपत्तिः । धूमालोकान्यतरत्वस्य गौरवेण व्याप्यतावच्छेदकत्वाभावादिति वाच्यं, अत्रावच्छेदकत्वस्य लघुगुरुसाधारणानतिरिक्तवृत्तित्वरूपत्वात् ।

अथ व्याप्यतावच्छेदकधूमत्वादिप्रकारकज्ञानं विनापि शब्दादिजन्यसाध्यवदन्यावृत्तित्वादिरूपव्याप्तिविशिष्टवत्ताज्ञानादनुमित्युदयेन व्याप्तिविशिष्टवत्ताज्ञानत्वेनैवानुमितिहेतुता वाच्येति सर्वत्र विशिष्टपरामर्शादनुमितिरिति ज्ञानलक्षणायाः प्रत्यासत्तित्वमावश्यकम् । न च स्वाश्रयावच्छिन्नत्वस्वनिरूपितावच्छेदकत्वविषयतानिरूपितविषयताश्रयधर्मावच्छिन्नत्वान्यतरसम्बन्धेन व्याप्तिज्ञानीयप्रकारताविशिष्टहेतुप्रकारतात्वेनानुगमेऽप्यव्याप्यत्वधूमत्वाद्यवच्छिन्नप्रकारतानां जनकतावच्छेदकत्वा(१)न्नोक्तदोष इति वाच्यं, महागौरवात् । एवं यत्त्वतत्त्वाननुगमेन विशिष्य धूमत्वाद्यवच्छिन्नव्याप्तिज्ञानतत्प्रकारकपक्षधर्मताज्ञानानां धूमत्वावच्छिन्नलिंगकानुमितौ हेतुत्वोपगमेन हेतुतावच्छेदकभेदेन हेतुतानन्त्यमिति लाघवाद्व्याप्तिविशिष्टवत्ताज्ञानत्वेनैवानुमितिहेतुत्वमुचितमिति चेत्—

न । भवन्मतेऽपि व्यापकताघटितव्याप्तिसाध्यवदन्यावृत्तित्वादीनां तत्प्रकारतानां चानतिप्रसक्तानुगतरूपाभावेन साध्यवदन्यावृत्तित्वज्ञानस्य पृथगेव हेतुता वाच्या । एवं च मयापि तत्र व्याप्तिविशिष्टवत्ताज्ञानत्वेनैव हेतुत्वमुपगम्योक्तशाब्दपरामर्शादनुमितेरुप-

---

( १ ) जनकतावच्छेदकतावच्छेदकत्वादिति 'ख' पुस्तकपाठः ।

गमात् । एवं भवन्मते हेतुतावच्छेदकघटितव्यापकताघटितव्याप्ते-रनुगमासम्भवेन हेतुतावच्छेदकभेदेन तज्ज्ञानहेतुताभेदस्यावश्यक-तया मयापि तत्र हेतुतावच्छेदकभेदेन ज्ञानद्वयस्य हेतुताया वा-च्यत्वेन । एवं यत्त्वतत्त्वेत्यादिद्वितीयदोषस्यानवकाशात् । न च कारणताद्वयकल्पनापेक्षया लाघवेनैककारणताकल्पनमेवोचित-मिति वाच्यं, तत्तद्धर्मावच्छिन्नव्यापकसाध्यसमानाधिकरणवृत्ति-तत्तद्धर्मरूपव्याप्तिज्ञानत्वतत्तद्धर्मप्रकारकपक्षधर्मताज्ञानत्वरूपास्म-न्मतसिद्धकारणतावच्छेदकयोर्भवदीयकारणतावच्छेदकताद‍ृशवि-शिष्टवत्ताज्ञानत्वव्यापकतया ताद‍ृशधर्मद्वयावच्छेदेन नियतपूर्वव-र्त्तिताया उभयवादिसिद्धतया ताद‍ृशधर्मद्वयावच्छेदेनानन्यथासि-द्धत्वमात्रं कल्पनीयम् ।

भवद्भिस्तु विशिष्टपरामर्शत्वावच्छेदेनानन्यथासिद्धत्वं नि-यतपूर्ववर्त्तित्वं च द्वयं कल्पनीयमिति कल्पनागौरवात् । वि-शिष्टपरामर्शत्वेन हेतुतामते व्याप्त्यंशीयाप्रामाण्यग्रहाभावप-क्षधर्मतांशीयाप्रामाण्यग्रहाभावयोरेकत्र निवेशनीयतया मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताबाहुल्यस्य दुर्वचत्वाच्च । अप्रामाण्यग्रहाभावस्य स्वतन्त्रहेतुत्वेऽपि व्या-प्तिविषयकत्वपक्षधर्मताविषयकत्वयोर्मिथो विशेष्यविशेषणभावे विनिगमनाविरहस्य दुर्वचत्वाच्च ।

किञ्चास्मन्मते व्यापकताज्ञानत्वेनैव व्याप्तिज्ञानस्य हेतुता-सामानाधिकरण्यांशानवगाहिनोऽपि ज्ञानादनुमित्युपगमात् । वि-शिष्टपरामर्शहेतुतामते च सामानाधिकरण्यविषयतानिवेशस्याधि-क्याद्गौरवम् । न च व्यापकताघटितव्याप्तिविषयकविशिष्टपराम-र्शस्य धूमत्वालोकत्वादिनानाधर्मावच्छिन्नहेतुप्रकारतानां स्वा-वच्छिन्नत्वस्वावच्छिन्नव्यापकसामानाधिकरण्यावच्छिन्नत्वोभय-

सम्बन्धेन धर्मविशिष्टप्रकारतात्वेनानुगमान्न तस्य हेतुतावच्छेदक-भेदेन हेतुताभेद इति वाच्यम् ।

मन्मतेऽपि स्वविषयव्यापकत्वनिरूपकत्व(१)निरूपकतावच्छेदकावच्छिन्नहेतुप्रकारकताकत्वसम्बन्धेन व्यापकताज्ञानविशिष्टज्ञानत्वेनानुगतहेतुतायास्सुवचत्वात् । सम्बन्धमध्ये सामानाधिकरण्यस्यापि निवेशनीयतया न पुरुषान्तरीयव्यापकताग्रहमादायातिप्रसंगः । तावतापि च सामानाधिकरण्यविषयतानिवेशापेक्षया लाघवमक्षुण्णमेव । भवतां सामानाधिकरण्यघटकतत्तत्पदार्थविषयताकूटस्यैव निवेशनीयत्वादिति—

तदसत् । लाघवेन साध्याभाववदवृत्तित्वरूपा केवलान्वय्यनुमानानुरोधेन साध्यसम्बन्धितावच्छेदकरूपवत्त्वरूपा वा व्याप्तिरेवानुमितिप्रयोजिका । तद्विषयकश्च विशिष्टपरामर्शो व्याप्यतावच्छेदकानवगाही शब्दादिजन्य उभयमतेऽपि पृथगेव हेतुरिति सर्वत्र तादृशविशिष्टपरामर्श एवानुमितिहेतुर्न तु ज्ञानद्वयं कार्य्यकारणभावान्तरकल्पने गौरवात् । एवं चानुमितिरूपकार्यलिंगककारणानुमानेनोपनीतव्याप्तिविशिष्टहेतुमत्तावगाहिप्रत्यक्षस्य सिद्धौ तन्निर्वाहाय ज्ञानलक्षणायाः प्रत्यासत्तित्वकल्पनमावश्यकम् । विशिष्टपरामर्शादिकल्पनागौरवस्य च फलमुखतया न दोषत्वम् । फलमुखगौरवस्यापि दोषत्वे निषादस्थपत्यधिकरण(२)सिद्धान्तविरोधादिति प्राहुरित्यलं पल्लवेन ।

तत्र ज्ञानलक्षणायाः कार्यतावच्छेदकं लौकिकान्यघटादिविषयताशालि प्रत्यक्षत्वम् । कारणतावच्छेदकं च किंचिद्विषयता-

(१) निरूपकत्वेत्यस्य पाठो नास्ति 'ख' पुस्तके ।

(२) ६-१-५२-५२ जैमिनीयसूत्रभाष्ये शास्त्रदीपिकायाञ्चाधिकरणमिदं द्रष्टव्यमिति ।

वच्छिन्नघटादिविषयताशालि ज्ञानत्वम् । एकविषयकज्ञानादन्य- विषयकोपनीतभानवारणाय कार्यकारणतयोरवच्छेदके घटादि- निवेशः । कार्यतावच्छेदके लौकिकान्यत्वनिवेशाल्लौकिकसन्निक- र्षजन्यनिर्विकल्पके तज्जन्याविशिष्टप्रत्यक्षे वा न व्यभिचारः । निर्विकल्पकादप्युपनीतभानवारणाय कारणतावच्छेदके घटादि- विषयतायां किञ्चिद्विषयतावच्छिन्नत्वनिवेशः । सामान्यलक्षणाया उक्तरीत्या असिद्ध्या न तज्जन्याज्ञातघटादिप्रत्यक्षे व्यभिचार- शङ्काऽपि । तेन तदुद्धाराय बहूनां क्लेशो वृथैवेति ध्येयम् ।

कारणतावच्छेदकमत्र नवीनानां मते तत्रापत्तिश्च

नवीनास्तु निर्विकल्पकस्योपनायकत्वे क्षतिविरहेण तद्वि- षयकज्ञानत्वमेव कारणतावच्छेद- कमिति प्राहुः ।

अथैतन्मते निर्विकल्पकप्रत्यक्षापत्तिर्दुर्वारा । सप्रकारकज्ञा- नस्य प्रत्यासत्तित्वमते तु विषयभासकज्ञानप्रत्यासत्तिविरहेण न तत्प्रत्यक्षापत्तिः(१) ।

भवन्मते तु निर्विकल्पकस्यैव विषयभासकज्ञानप्रत्यासत्ति- त्वसंभवेन तत्प्रत्यक्षापत्तिर्दुरुद्धरैव ।

यत्त्वयोग्यत्वादेव न निर्विकल्पकप्रत्यक्षमिति —

तदसत् । प्रत्यक्षसामग्रीसत्त्वे योग्यत्वस्याकिंचित्करत्वात् । न हि प्रयोजनक्षतिभिया सामग्रीकार्यं नार्जयतीति चेत् —

न । अभावप्रत्यक्षवज्ज्ञानप्रत्यक्षस्यापि विशिष्टवैशिष्ट्यबो- धमर्यादानातिक्रमेण विषयांशे विशिष्टवैशिष्ट्यविषयताशालित्व- नियमेन विशेषणतावच्छेदकीभूतघटत्वादिप्रकारकज्ञानविरहेणैव घटत्वादिनिर्विकल्पकस्य घटीयत्वादिना प्रत्यक्षापत्त्यभावात् । न च तादृशनियमस्यासिद्ध्या घटत्वादिप्रकारकज्ञानासत्त्वे-

(१) प्रत्यक्षोत्पत्तिरिति 'क' पुस्तकपाठः ।

ऽपि केवलविशेष्ये विशेषणमित्यादिरीत्या घटमहं जानामी-त्याद्याकारकनिर्विकल्पकप्रत्यक्षापत्तिर्भवन्मते दुर्वारेति वाच्य-म् । तर्हि विषयामिश्रितज्ञानप्रत्यक्षं नास्तीतिनियमस्याप्य-सिद्ध्या सप्रकारकज्ञानस्योपनायकतामतेऽपि विषयामिश्रितज्ञा-नग्रहं प्रत्येव सप्रकारकविषयग्रहस्योपनायकज्ञानाविधया हेतुत्वेन विषयामिश्रितज्ञानप्रत्यक्षापत्तेर्दुर्वारत्वात् । न च तादृशज्ञानप्रत्य-क्षस्याप्रसिद्ध्यानापत्तिरिति वाच्यम् । ममापि विशेष्ये विशेषण-मितिरीत्या ज्ञानप्रत्यक्षस्याप्रसिद्धौ वापत्तिविरहस्य सुवचत्वात् ।

वस्तुतस्तु निर्विकल्पकाद्वितीयक्षणे विशिष्टबुद्धौ सत्यां तृती-यक्षणे निर्विकल्पकप्रत्यक्षापत्तिवारणाय सप्रकारकज्ञानहेतुता-वादिनापि विषयतासंसर्गावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपि-तविशेष्यतासम्बन्धेन मानसं प्रति तादात्म्यसम्बन्धेन घटत्वादि-प्रकारकज्ञानत्वेन हेतुत्वमवश्यं वाच्यम् । तथा च तादृशहेतुतयैव निर्विकल्पकस्योपनायकतामते निर्विकल्पकाद्वितीयक्षणेऽपि तत्प्रत्य-क्षवारणं संभवतीति किंचिद्विषयतावच्छिन्नघटादिविषयताशालि-त्वरूपगुरुरूपेणोपनायकज्ञानहेतुत्वे मानाभावः ।

यत्तु विषयस्य कार्यसहभावेनैव प्रत्यक्षं(१) हेतुतया सप्रकार-कज्ञानहेतुतामते निर्विकल्पकतृतीयक्षणे तत्प्रत्यक्षापत्त्यभावेन नोक्तयुक्तिरुक्तहेतुत्वसाधिका, किन्तु यत्रापेक्षाबुद्ध्यात्मकघट-त्वादिविषयकानिर्विकल्पकं तदनन्तरं च घट इत्याकारकविशिष्ट-बुद्धिस्तदुत्तरं घटीयत्वादिना निर्विकल्पकप्रत्यक्षप्रसंगवारणायै-वोक्तहेतुताकल्पनमिति नव्यतरैरुक्तम्—

तदसत् । ज्ञानाद्युत्पत्तिद्वितीयक्षणे ज्ञानत्वादिनिर्विकल्प-कोत्पत्तौ तृतीयक्षण एव ज्ञानत्वादिविशिष्टबुद्ध्यात्मकजानामी-

(१) प्रत्यक्षे इति 'ख' पुस्तकपाठः ।

त्याकारकानुव्यवसायस्योत्पत्तिसंभवेन विषयस्य कार्य्यसहभावेन प्रत्यक्षहेतुताया असंभवदुक्तिकत्वात् । अपेक्षाबुद्धेः क्षणत्रयावस्थायितां मन्यमानैस्तदव्यवहितोत्तरक्षणे तदधिकरणीभूतात्मनि घटत्वादिविषयकविशेषगुणोत्पादस्यानभ्युपगमाच्च । ज्ञानलक्षणोपनीतभानयोश्चात्मनिष्ठप्रत्यासत्त्यैव कार्यकारणभावः । स च समवाय एव । तेनैकपुरुषीयज्ञानान्नान्यस्योपनीतभानापत्तिः । सन्निकर्षस्य विषयनिष्ठप्रत्यासत्त्यैव हेतुत्वमितिनियमे तु विषयनिष्ठविषयताप्रत्यासत्त्या तत्तत्पुरुषीयत्वं निवेश्यैव हेतुत्वमिति दिक् । अधिकमन्यत्र द्रष्टव्यम् ।

योगजधर्मसन्निकर्षविचारः

**योगजधर्मसन्निकर्षश्च** योगाभ्यासजन्यादृष्टविशेषः । तेनैव सन्निकर्षेण योगिनः सर्वविषयकसाक्षात्कारः । तथा च गीता(१)—

अनागतमतीतं च वर्तमानमतीन्द्रियम् ।
विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिन इति ॥

न च योगजधर्मस्यालौकिकसन्निकर्षत्वेन पश्यन्तीत्यनुपपन्नं, दृशेर्लौकिकसन्निकर्षजन्यप्रत्यक्षार्थकत्वादिति वाच्यम्, 'सोऽपश्यत्प्रणिधानेने'त्यादौ ध्यानजन्यमानसेऽपि तत्प्रयोगदर्शनात् । अत्र योगिनश्चाक्षुषादौ चक्षुरादियोग्यमेव विषयो मानसे त्वयोग्यमपि । 'हृदैव योगी प्रतिवेत्ति सर्वम्', 'द्वे ब्रह्मणी वेदितव्ये' इत्याद्यागमबलादयोग्येऽपि तत्सामर्थ्यकल्पनात् । तथा च भट्टाः(२)—

(१) पद्यमिदं श्रीमद्भगवद्गीतायां नोपलभ्यते मुद्रितपुस्तकेषु । प्रक्षिप्तं वा भ्रष्टपद्यं वा ।

(२) कुमारिलभट्टाः श्लोकवार्त्तिके चोदनासूत्रे ११४ कारिका ।

भट्टानां मते योगज-धर्मसन्निकर्षविचारः

यत्राप्यतिशयो दृष्टस्स स्वार्थानतिलंघनात् ।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥

इतीतिसंप्रदायः ।

नव्यानां मतम्

नव्यास्तु योगजधर्मस्यैकज्ञानविषयत्वादिसम्बन्धेन विषयनिष्ठतया समवायेनात्मनिष्ठतया वा स्वविशिष्टसाक्षात्कारमात्रे हेतुत्वं न तु चाक्षुषमानसादिभेदेनेति परमाण्वादेश्चाक्षुषादिविषयता दुर्वारैवेत्याहुः ।

अपरे तु–'हृदैव सर्वं प्रतिवेत्ति योगी', 'सोऽपश्यत्प्रणिधानेन', 'क्षणमात्रमृषिस्तस्था'वित्यादि स्वारस्येन ब्रह्मवेदनार्थत्वेन च योगजधर्मजन्यज्ञानं मानसमेव । 'यत्राप्यतिशयो दृष्ट' इत्यादिकं 'स्वार्थानतिलंघनादि'त्यस्य स्वविषयानतिलंघनादित्यर्थकतया सर्वविषयकस्य मनस एवातिशय इत्यर्थकम् । अत एव 'न रूपे श्रोत्रवृत्तिते'तिबहिरिन्द्रियाणां नातिशय इत्यर्थकमित्याहुः ।

प्रांचस्तु–अलौकिकप्रत्यासत्तिरपि विशेषणतान्तर्गतैव । तथा हि योगजधर्मो मनस्संयुक्तात्मसमवेतस्तत्र विशेषणताख्यः स्वरूपसम्बन्धो विश्वेषाम् । एवं मनस्संयुक्तात्मसमवेतज्ञाने विशेषणता तद्विषयाणामेव मनस्संयुक्तात्मसमवेतज्ञानविषयीभूतसामान्ये विशेषणताख्यः स्वरूपसम्बन्धो व्यक्तीनाम् । तथा चेयं सर्वा प्रत्यासत्तिर्मनस एव, न तु बहिरिन्द्रियाणाम् । एवं च सुरभि चन्दनमित्यादिज्ञानं सौरभप्रत्यासन्नेन मनसा चन्दनप्रत्यासन्नेन चक्षुषा जन्यते । न चैवमस्य विषयप्रत्यासन्नमनोजन्यत्वेन मानसत्वापत्तौ सांकर्यापत्तिरिति वाच्यं, प्रमाणान्तरासहकृतमनोजन्यत्वस्य मानसत्वप्रयोजकत्वात् । अन्यथाऽऽत्मानुमितेरात्मरूपविषयप्रत्यासन्नमनोजन्यत्वेन मानसत्वं दुरपवादं स्यात् । प्रमाणान्तरासहकृतत्वं च मानसविजातीयज्ञानकरणासहकृतत्वम् ।

तेन स्मृतिकरणानुभवसहकृतमनोजन्यायां स्मृतौ न मानसत्वापत्तिः। न च बहिरिन्द्रियप्रत्यासत्तित्वमेवास्यां कथं नोच्यत इति वाच्यं, तथा सति श्रोत्रेण ज्ञानादेरुपनीतस्य ग्रहे श्रोत्रात्मनोस्संयोगाभावेन श्रोत्रसंयुक्तमनस्संयुक्तात्मसमवेतज्ञानादौ विशेषणतायाः प्रत्यासत्तित्वे गौरवात्। मनःप्रत्यासत्तित्वे च मनःसंयुक्तात्मसमवेतज्ञानादौ विशेषणतायाः प्रत्यासत्तित्वे लाघवात्।

किं च मानसज्ञानस्थले मनःप्रत्यासत्तित्वस्यावश्यकत्वे तेनैव सर्वत्रोपपत्तौ अन्येन्द्रियप्रत्यासत्तित्वे मानाभावः। तस्मादलौकिकप्रत्यासत्तिर्मनस एव। अथास्या विशेषणतात्वे एतज्जन्यस्य लौकिकप्रत्यक्षत्वापत्तिरिति चेत्—

मैवम्। लौकिकत्वं हि न षडन्यतमप्रत्यासत्तिजन्यत्वं, किन्तु योगजधर्मादिप्रत्यासत्त्यजन्यत्वम्। तच्चास्या विशेषणतान्तर्भावेऽपि न योगजधर्मादिजन्ये संभवतीत्याहुरिति दिक्।

तच्च प्रत्यक्षं द्विविधम्—निर्विकल्पकं सविकल्पकं च।

प्रत्यक्ष-विभागः तत्र निर्विकल्पकत्वं सविकल्पकत्वं च न जातिरूपम्। चाक्षुषत्वादिना सांकर्यादांशिकत्वाच्च किन्तूपाधिरूपम्। तत्र वैशिष्ट्यानवगाहिज्ञानं निर्विकल्पकम्। तदवगाहिज्ञानं सविकल्पकम्।

निर्विकल्पके प्रश्नाः अथ निर्विकल्पकस्य वैशिष्ट्यानवगाहित्वमसिद्धम्, जातिव्यक्त्योरिव समवायरूपवैशिष्ट्यस्यापि घटत्वादिनिर्विकल्पके भानसंभवात्। न च विशेषणज्ञानार्थं जातिभानम्। तज्ज्ञानं च न व्यक्तिभानं विनेति तदपि समवायभाने तु न किमपि प्रयोजनमिति न तज्ज्ञानमिति वाच्यम्। प्रयोजनाभावेऽपि सामग्रीसत्वे कार्यावश्यंभावादिति चेत्—

न। ससम्बन्धिकपदार्थप्रत्यक्षे सम्बन्धिज्ञानस्य हेतुताया

ज्ञानादिसम्बन्धिकपदार्थप्रत्यक्षस्थले क्लृप्ततया घटत्वादिसम्बन्धिज्ञानाभावेन निर्विकल्पके सम्बन्धाभावात् । निर्विकल्पकात्मकसम्बन्धिज्ञाने सति सविकल्पके तद्भानाच्च । अत एव निर्विकल्पके व्यक्तिभाने मानाभावः । व्यक्तिभानं विना न जातिभानमितिनियमे मानाभावात् । घटादिनिर्विकल्पके घटादिव्यक्तिभानानुरोधेन जातिभाने स्वाश्रयभाननियमस्य वाच्यतया रजतत्वादिभ्रमे व्यभिचारेण तादृशनियमस्यासंभवाच्चेत्यपि निरस्तम् । सम्बन्धिभानहेतुत्वानुरोधेन तस्यावश्यकत्वात् । जातेरिव व्यक्तेरपि समवायसम्बन्धित्वादिति संप्रदायः ।

वस्तुतस्तु ज्ञानादिसम्बन्धिकपदार्थप्रकारकप्रत्यक्ष एव सम्बन्धिज्ञानस्य हेतुतायाः क्लृप्तत्वेन निर्विकल्पकेऽपि समवायभानमस्त्येव । अत एव निर्विकल्पकस्याप्युपनायकतया तस्मात्समवायोपनीतभाननिर्वाहः । एतेन व्यक्तिभाने मानाभाव इत्यपि निरस्तम् । निर्विकल्पकाद्यवस्त्युपनीतभानानुरोधेन तस्यावश्यकत्वात् ।

केचित्तु तद्विशिष्टबुद्धौ तद्विशेषणज्ञानस्येव तद्विशेष्यकबुद्धौ तद्विशेष्यज्ञानस्यापि हेतुतया घटादिनिर्विकल्पके घटत्वादेरिव घटादेरपि भानमावश्यकम् । न च घटत्वादिसामान्यलक्षणप्रत्यासत्तिजन्यातीतानागतघटादिविशेष्यकज्ञानेऽतीतघटादेः प्राग्ज्ञानेन व्यभिचारान्नोक्तरूपेण विशेष्यज्ञानहेतुतासंभव इति वाच्यं, सामान्यलक्षणायाः स्वाश्रयनिर्विकल्पकजनकत्वांगीकारेण तादृशनिर्विकल्पकोत्तरं घटत्वादिसामान्यलक्षणया घटत्वादिप्रकारकघटादिविशेष्यकज्ञानजननेनोक्तव्यभिचाराभावात् । अथ सामान्यलक्षणायाः स्वाश्रयनिर्विकल्पकजनकत्वे प्रमेयत्वादिसामान्यलक्षणप्रत्यासत्त्या जगत एव निर्विकल्पकजननात्सा-

र्वज्ञापत्तिरिति चेत्—

मैवम् । सार्वज्ञं यदि सर्वविषयकप्रत्यक्षवत्त्वं तदा सामान्यप्रत्यासत्तेर्निर्विकल्पकाजनकत्वपक्षेऽपि तद्दुर्वारम् । प्रमेयत्वादिसामान्यप्रत्यासत्त्या प्रमेयत्वादिप्रकारेण जगत एव प्रत्यक्षस्य सर्वसंमतत्वात् । यदि च घटत्वाद्यंशे निष्प्रकारकघटत्वादिनिखिलतत्तद्धर्मप्रकारकनिखिलतत्तद्धर्मिविशेष्यकप्रत्यक्षवत्त्वं तदा सामान्यलक्षणप्रत्यासत्तेर्निर्विकल्पकजनकत्वाभ्युपगमेऽपि न सार्वज्ञप्रसक्तिः । सामान्यलक्षणाजन्यनिर्विकल्पके तद्धर्मप्रकारकत्वतद्धर्मिविशेष्यकत्वयोरभावात् । सविकल्पके च घटत्वाद्यंशप्रमेयत्वादेः प्रकारतया घटत्वाद्यंशे निष्प्रकारकत्वाभावात् । न च प्रमेयत्वादिसामान्यलक्षणप्रत्यासत्त्या घटत्वपटत्वादीनां सर्वेषामेव स्वाश्रयाणां निर्विकल्पकजनने तदुत्तरं स्वप्रकारकस्वाश्रयविशेष्यकप्रत्यक्षजननसमये घटत्वपटत्वादीनां सर्वेषामेव स्वाश्रये विशेषणीभूयमानसम्भवः विशेषणज्ञानसम्भवादिति वाच्यम् । अलौकिकघटत्वपटत्वादिप्रकारकप्रत्यक्षत्वावच्छिन्नं प्रति सप्रकारकघटत्वपटत्वादिज्ञानात्मकज्ञानलक्षणप्रत्यासत्तेर्हेतुतया निर्विकल्पकात्तदसम्भवात् । न च तथापि निर्विकल्पकोत्पत्तितृतीयक्षणे प्रमेयत्वादिसामान्यलक्षणप्रत्यासत्त्या तादृशज्ञानसंभवः । द्वितीयक्षणोत्पन्नप्रमेयत्वादिसामान्यलक्षणप्रत्यासत्तिजन्यविशिष्टज्ञानस्यैव ज्ञानलक्षणप्रत्यासत्तित्वात् । निर्विकल्पकस्यापि कारणीभूतप्रमेयत्वादिसामान्यप्रकारकज्ञानविशेष्यांशे प्रमेयत्वादिप्रकारकत्वेनांशतः सप्रकारकत्वात् । द्वितीयक्षणेऽपि तादृशज्ञानसंभवश्चेति वाच्यम् । तथा सति सामान्यलक्षणप्रत्यासत्तेर्निर्विकल्पकाजनकत्वपक्षेऽपि प्रमेयत्वादिसामान्यलक्षणप्रत्यासत्तिजन्यप्रत्यक्षोत्तरं तस्य दुर्वारत्वात् ।

न च सामान्यलक्षणप्रत्यासत्तेर्निर्विकल्पकाजनकत्वपक्षे प्रमेयत्वादिसामान्यलक्षणप्रत्यासत्तिजन्यप्रमेयत्वादिप्रकारकघटत्वपटत्वादिनिखिलवस्तुविशेष्यकप्रत्यक्षोत्पत्तिद्वितीयक्षणे प्रमेयत्वादिरूपेण घटत्वपटत्वादीनां सर्वेषामेव स्वाश्रयेऽपि विशेषणीभूयमानसंभवेऽपि घटत्वपटत्वाद्यंशेऽन्याप्रकारकघटत्वपटत्वादिप्रकारकज्ञानस्यासंभव इति वाच्यम् । तर्हि सामान्यलक्षणप्रत्यासत्तेर्निर्विकल्पकप्रत्यक्षजनकत्वपक्षेऽपि न तादृशज्ञानसंभवः । प्रमेयत्वादिभासकसामग्रीसत्वेन प्रमेयत्वादेर्घटत्वादौ विशेषणीभूयमानस्यावश्यकत्वादित्याहुः—

तदसत् । सामान्यलक्षणप्रत्यासत्तेर्निर्विकल्पकजनकत्वपक्षे घटत्वाद्यंशेऽन्याप्रकारकघटत्वादिज्ञानस्य निर्विकल्पकस्यैव सत्वेन घटत्वांशेऽन्याप्रकारकघटत्वादिविशिष्टबुद्धेस्सामग्रीसत्वेन निर्विकल्पकोत्तरं तादृशाविशिष्टबुद्धेरपि दुर्वारत्वात् । प्रमेयत्वादेरपि भासकसामग्रीसत्त्वेन जातिमान् घट इत्यादिज्ञानवदुभयाविषयताशालिज्ञाने बाधकाभावात् । सामान्यलक्षणप्रत्यासत्तेर्निर्विकल्पकाजनकत्वपक्षे तु घटत्वाद्यंशेऽन्याप्रकारकघटत्वादिज्ञानविरहेण तादृशविशिष्टज्ञानासंभवात् । न च तादृशसार्वज्ञे इष्टापत्तिरिति वाच्यम् । तथासति प्रमेयत्वादिसामान्यलक्षणप्रत्यासत्तिजन्यज्ञानोत्तरं घटः पृथिवी न वा घटो द्रव्यं न वेत्यादिसंशयानुपपत्तेः । न च प्रमेयत्वादिसामान्यलक्षणप्रत्यासत्तिजन्यद्रव्यं पृथिवीत्यादिज्ञानस्य द्रव्यत्वपृथिवीत्वाद्यंशे निर्धर्मितावच्छेदकतया न तस्य संशयप्रतिबन्धकत्वं सम्भवतीति वाच्यम् । घटत्वपटत्वादिप्रकारकज्ञानसत्वेन प्रमेयत्वादिसामान्यलक्षणप्रत्यासत्तिजन्यविशिष्टप्रत्यक्षोत्तरं घटत्वपटत्वादेरपि द्रव्यत्वपृथिवीत्वाद्यंशे धर्मितावच्छे-

दकतया भानसंभवात् । किं च रजतत्वादिस्मरणोत्तरं दोषवशात् जायमाने इदं रजतमित्यादि शुक्त्यादिविशेष्यक-रजतत्वादिप्रकारकज्ञाने व्यभिचारेण विशेष्यज्ञानहेतुत्वमसंभवदु-क्तिकमेव । न च तत्रान्तरा शुक्त्यादिनिर्विकल्पकाभ्युपगमान्न व्यभिचार इति वाच्यम् । पूर्वोपदर्शित(१)रजतत्वादीनां तत्र प्रका-रतया भाने बाधकाभावेन तत्र शुक्त्यादिनिर्विकल्पकोपगमासंभ-वात् । न च तत्र विशेष्यज्ञानाभाव एव बाधक इति वाच्यम् । तथा सति विशेष्यज्ञाने हेतुतासिद्धौ शुक्त्यादिनिर्विकल्पक सिद्धिस्तत्सिद्धौ च व्यभिचाराभावे तादृशहेतुतासिद्धिरित्यन्यो-न्याश्रयात् ।

अपि च समानप्रकारकत्वेनैवानुमितिपरामर्शयोः कार्यकारणभावांगीकर्तृनवीनमते पर्वतत्वाद्यवच्छिन्नविशे-ष्यकवह्न्यादिविधेयकानुमितौ पर्वतत्वाद्यवच्छिन्नविशेष्यकवह्न्या-दिव्याप्यधूमादिप्रकारकनिश्चयत्वेन हेतुतया एकपर्वतविशेष्य-कपरामर्शात्पर्वतान्तरविशेष्यकानुमितिर्जायते । तत्र व्यभिचा-रेण विशेष्यज्ञानहेतुत्वमसंभावितम् । न च पर्वतत्वादिकं निवे-श्यात्मनिष्ठप्रत्यासत्त्याऽनुमितिपरामर्शयोः कार्यकारणभावोपगमे पर्वतत्वादिभेदेनानन्तकार्यकारणभावापत्तिरिति वह्न्यादिविधेय-तानिरूपितविशेष्यतासम्बन्धेनानुमितिं प्रति वह्निव्याप्यधूमादि-प्रकारतानिरूपितविशेष्यतासम्बन्धेन परामर्शस्य हेतुतया एक-पर्वतविशेष्यकपरामर्शात्पर्वतान्तरविशेष्यकानुमितिर्न सम्भवतीति वाच्यम्, वह्निव्याप्यधूमवद्द्रव्यमित्यादिद्रव्यत्वाद्यवच्छिन्नपर्वता-दिविशेष्यकपरामर्शात्पर्वतो वह्निमानित्यादिपर्वतत्वाद्यवच्छिन्न-विशेष्यकानुमित्युत्पादवारणाय विशेष्यतासम्बन्धेन तयोः का-

(१) 'पूर्वोपस्थितेर्'ति 'ख' पुस्तकपाठः ।

र्यकारणभावोपगमेऽपि पर्वतत्वादिनिवेशस्यावश्यकत्वात् । न चैवं लाघवाद्वह्न्यादिविधेयतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेनानुमितिं प्रति वह्निव्याप्यधूमादिप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेनैव परामर्शस्य हेतुत्वमास्तामिति वाच्यम्, इष्टापत्तेः । तथापि पर्वतादिविशेष्यानन्तर्भावेन व्यभिचारवारणस्याशक्यत्वात् । अनुमानपरिच्छेदवक्ष्यमाणरीत्यात्मनिष्ठप्रत्यासत्त्यैवानुमितिपरामर्शयोः कार्यकारणभावस्यावश्यकत्वाच्च ।

वस्तुतस्तु तद्विशेष्यकबुद्धौ तद्विशेष्यज्ञानहेतुत्वे प्रमाणाभावेन तादृशहेतुत्वमसिद्धमेव । न चान्वयव्यतिरेकाभ्यां तद्धेतुत्वमिति वाच्यम् । विशेष्येन्द्रियसन्निकर्षादेरेव तद्धेतुत्वसम्भवेन तेन विशेष्यज्ञानान्वयव्यतिरेकयोरन्यथासिद्धत्वात् । तादृशान्वयव्यतिरेकयोरप्यासिद्धेश्च । न चैवं तद्विशिष्टबुद्धौ तद्विशेषणज्ञानस्यापि हेतुत्वं न स्यात् । विशेषणेन्द्रियसन्निकर्षादिना तदीयान्वयव्यतिरेकयोरन्यथासिद्धत्वं तयोरिवासिद्धत्वं चेत्यस्य तत्रापि सुवचत्वादिति वाच्यम् । अग्रे वक्ष्यमाणयुक्तेरेव तत्सिद्धेः । तादृशयुक्तेश्च विशेष्यज्ञानहेतुतायामसम्भवादिति न किञ्चिदेतत् । तस्माद्घटादिनिर्विकल्पकस्य घटादिविशेष्यव्यक्तिविषयत्वे पूर्वोपदर्शितमदुक्तयुक्तिरेवादरणीयेति दिक् ।

इत्थं च प्रकारताशून्यं विशेष्यताशून्यं सांसर्गिकविषयताशून्यं वा ज्ञानं निर्विकल्पकम् । प्रकारताख्यविषयताशालि विशेष्यताशालि सांसर्गिकविषयताशालि वा ज्ञानं सविकल्पकमिति सिद्धम् ।

निर्विकल्पकसविकल्पकलक्षणनिष्कर्षः

ननु निर्विकल्पके मानाभावः । तस्यातीन्द्रियत्वेन प्रत्यक्षासम्भवात् । न च विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतया घटत्वादिज्ञानं विना घटत्वादिविशिष्टबुद्ध्य-

निर्विकल्पके मानाभावः

सम्भवात्तत्सिद्धिरिति वाच्यं, तत्रैव मानाभावात् । विशेषणविशेष्येन्द्रियसन्निकर्षादित एव तदुपपत्तेरिति चेत्—

अत्रोच्यते–जातिमानित्याद्याकारकघटत्वादिप्रकारकज्ञानीयजातित्वाद्यवच्छिन्नघटत्वादिप्रकारताभ्यो घट इत्याद्याकारकज्ञानीयनिरवच्छिन्नघटत्वादिप्रकारतासु तावद्वैलक्षण्यमनुभवसिद्धतया दुरपह्नवमेव । तादृशप्रकारताश्च यदि तत्प्रकारकज्ञानसामग्रीमात्रनियम्यास्तदा जातिमानित्याद्याकारकघटत्वादिप्रकारकप्रत्यक्षविलोपप्रसङ्गः । तस्यापि तादृशप्रकारताशालित्वे बाधकाभावात् । यदि च ताः घटत्वाद्यंशे किञ्चित्प्रकारकज्ञानसामग्र्यसमवहिततादृशसामग्रीनियम्यास्तदा जातिमान् घट इत्याद्याकारकद्विविधघटत्वादिप्रकारताशालिज्ञानविलोपप्रसङ्गस्तस्माज्जातित्वाद्यवच्छिन्नघटत्वादिप्रकारताशालिबुद्धौ जातित्वादिना घटत्वादिविषयकज्ञानस्य निरवच्छिन्नघटत्वादिप्रकारताशालिबुद्धौ निरवच्छिन्नघटत्वादिविषयकज्ञानस्य च हेतुतां स्वीकृत्य यदा जातित्वादिनैव घटत्वादिविषयकं ज्ञानं तदा जातिमानित्याद्याकारकं ज्ञानम् । यदा च निरवच्छिन्नघटत्वादिविषयकमेव तदा घट इत्याद्याकारकम् । यदा च जातित्वादिना घटत्वादिज्ञानं निरवच्छिन्नघटत्वादिविषयकं ज्ञानं च तदा जातिमान घट इत्याद्याकारकद्विविधघटत्वादिप्रकारताशालिज्ञानमिति व्यवस्थोपेया । एवं च प्राथमिकघटत्वादिविशिष्टबुद्ध्यनुरोधेन निर्विकल्पकासिद्धिरावश्यकी ।

ननु विशिष्टबुद्धौ विशेषणज्ञानहेतुता न सम्भवति, विशिष्टस्मरणे व्यभिचारात् । न च विशेषणज्ञानस्य ज्ञानत्वमनिवेश्य तद्विषयकत्वेनैव हेतुतया विशिष्टस्मरणपूर्वं तादृशसंस्कारसत्वान्न व्यभिचार इति वाच्यम् । तथा सत्यनुद्बुद्धतद्विषयकसंस्कारादपि

तद्विशिष्टबुद्ध्यापत्तेः । न चोद्बोधकस्य विशेषसामग्रीत्वाभ्युपगमान्नोक्तापत्तिरिति वाच्यं, उद्बोधकं विनापि तादृशकारणतावच्छेदकावच्छिन्नज्ञानाद्विशिष्टबुद्धित्वावच्छिन्नानुभवजननेन तद्धर्मावच्छिन्नोत्पत्तौ उद्बोधकस्य विशेषसामग्रीत्वासम्भवात् । अथानुभवत्वं विशेषणज्ञानजन्यतावच्छेदकमिति विशिष्टस्मरणस्य कार्यतावच्छेदकानाक्रान्ततया न तत्र व्यभिचारः । न चानुभवत्वस्य स्मृत्यन्यज्ञानत्वरूपतया गौरवमिति वाच्यं, तस्य जातिरूपत्वात् । न च तत्र मानाभावः । विशेषणज्ञानजन्यतावच्छेदकतयैव तत्सिद्धेरिति चेत्—

न । बाधाभावादिजन्यतावच्छेदकतया सिद्धेर्न परोक्षत्वादिना सांकर्येणानुभवत्वस्य जातित्वासंभवादिति चेत्—

अत्र केचित्—निर्विकल्पकात्मकस्मरणस्य विशिष्टस्मरणप्राक्काले स्वीकारादेव न तत्र व्यभिचारः । अथ रजतत्वादिना रंगं रङ्गत्वादिना रजतमवगाहमानात्संस्काराद्विपरीतक्रमेण तदवगाहिन्याः स्मृतेर्वारणाय तत्प्रकारकतद्विशेष्यकस्मृतिं प्रति तत्प्रकारकतद्विशेष्यकसंस्कारत्वेन हेतुत्वस्योपेयतया निर्विकल्पकात्मकस्मरणस्य संस्कारजन्यतावच्छेदकानाक्रान्ततया संस्कारान्निर्विकल्पकस्मरणासम्भवः । न च तद्विशेष्यकतत्प्रकारकसंस्कारस्य तद्विशेष्यत्वानिरूपितप्रकारतान्यतदीयविषयतैव जन्यतावच्छेदिका । तथा च निर्विकल्पकीयविषयतायामपि तादृशविशिष्टभेदसत्वान्निर्विकल्पकस्मृतेस्संस्कारजन्यतावच्छेदकाक्रान्तत्वं संभवत्येवेति वाच्यम् । तथा सति रंगादिविशेष्यकरजतत्वादिप्रकारकसंस्कारजन्यरजतत्वादिनिर्विकल्पकस्मरणस्यापि रजतादिविशेष्यकरजतत्वादिप्रकारकसंस्कारजन्यतावच्छेदकाक्रान्ततया व्यभिचारप्रसङ्गादिति चेत्—

न। निर्विकल्पकस्मरणानुरोधेन तद्विषयकस्मृतित्वावच्छिन्नं प्रति तद्विषयकसंस्कारत्वेन कारणत्वान्तरस्य कल्पनेन निर्विकल्पकस्मरणसम्भवात् ।

यदि चैतादृशातिरिक्तकार्यकारणभावकल्पने गौरवं, एवं गगनादिपदादाकाशादिगोचरनिर्विकल्पकस्मरणानुपपादनं च न हि गगनगोचरो निर्विकल्पकसाक्षात्कारो विद्यते येन तथाविधः संस्कारो जायेत, अनादिस्मरणसंस्कारधाराकल्पने तु प्रमाणाभावोऽपूर्वस्यातीन्द्रियस्य वस्तुनः पारिभाषिकडित्थादिपदादस्मरणप्रसङ्गश्चेति विभाव्यते तथापि न क्षतिः। प्रकारान्तरेण निर्विकल्पकस्मरणोपपादनसम्भवात् । तथा हि–पर्वतो वह्निमानित्यादिस्मृतौ तादृशसंस्कारस्य हेतुत्वं सर्वसिद्धम् । तत्केन रूपेण न तावद्वह्नित्वाद्यवच्छिन्नप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताशालिस्मृतित्वावच्छिन्नं प्रति तादृशसंस्कारत्वेन समवायघटितसामानाधिकरण्यप्रत्यासत्त्या हेतुत्वम् । तथा सति पर्वतत्वादिना महानसादौ वह्नित्वादिना गैरिकाद्यवगाहिनः संस्काराद्वह्नित्वादिना वह्न्याद्यवगाहिनः पर्वतत्वादिना पर्वतावगाहिनः स्मरणस्यापत्तेः । नापि वह्नित्वाद्यवच्छिन्नवह्न्यादिनिष्ठप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नपर्वतादिनिष्ठविशेष्यताशालिस्मृतित्वावच्छिन्नं प्रति तादृशसंस्कारत्वेन हेतुत्वम् । तथा सति पर्वतत्वादिना पर्वताद्यन्तरे वह्नित्वादिना वह्न्याद्यन्तरावगाहिनः संस्कारात्पर्वतत्वादिनैतत्पर्वतादौ वह्नित्वादिनैतद्वह्न्याद्यवगाहिनः स्मरणस्य प्रसङ्गात् । न च वह्नित्वाद्यवच्छिन्नतत्तद्व्यक्तिप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नतत्तद्व्यक्तिवृत्तिविशेष्यताशालिस्मृतित्वावच्छिन्नं प्रति तादृशसंस्कारत्वेन हेतुत्वान्नोक्तदोष इति वाच्यम् । तथा

सति वह्नित्वादिना तत्तत्स्मृतिव्यक्तिं पर्वतत्वादिना तत्तत्संस्कारव्यक्तिं चावगाहमानस्य स्मरणस्यानुरोधेन तत्तत्स्मरणव्यक्तिं तत्तत्संस्कारव्यक्तिं च निवेश्य तादृशस्मरणं प्रति तादृशसंस्कारस्य हेतुत्वे स्मरणव्यक्तिसंस्कारव्यक्तिभेदेन हेतुताभेदस्यावश्यकत्वे वह्न्यादिविषयमनिवेश्य तत्तद्व्यक्तित्वादिनैव स्मृतिसंस्कारयोर्हेतुहेतुमद्भावस्य कल्पयितुमुचितत्वेनानन्तहेतुतापत्तेः । किन्तु विषयिविषयतयोस्संसर्गस्य विषय्युत्पादकसामग्रीनियम्यतया ज्ञानविषयतयोस्संसर्गस्य ज्ञानोत्पादकसामग्रीसापेक्षत्वेन विषयतानिष्ठनिरूपकतासम्बन्धेन तदात्मसमवेतस्मृतित्वावच्छिन्नं प्रति तेन सम्बन्धेन तदात्मसमवेतसंस्कारत्वेन हेतुतोपेया । अस्ति च वह्न्यादिप्रकारतानिरूपितपर्वतादिविशेष्यतायां निरूपकतासम्बन्धेन संस्कार इति तत्र निरूपकतासम्बन्धेन पर्वतो वह्निमानित्याद्याकारकं स्मरणमुत्पद्यते । ज्ञानसंस्कारयोर्विषयताभेदे मानाभावात् । एवं च निर्विकल्पकीयविषयताव्यक्तावपि संस्कारस्य निरूपकतासम्बन्धेन सत्वात्तत्र तेन सम्बन्धेन स्मरणमुपपद्यत इति न निर्विकल्पकस्मरणानुपपत्तिरित्याहुः—

तदसत् । निर्विकल्पकविषयतायास्संस्कारानिरूपितत्वे मानाभावात् । गगनादिपदादाकाशादिगोचरनिर्विकल्पकस्मरणानुपपत्तितादवस्थ्याच्च । शाब्दबुद्धेर्निर्विकल्पकत्वाभावेन लौकिकप्रत्यक्षस्य च तत्रासम्भवेन गगनादिवृत्तिनिर्विकल्पकविषयतायाः केन चिदनुभवेनानिरूप्यतया संस्कारस्य निरूपकतासम्बन्धेन तत्रासत्वात् ।

वस्तुतस्त्वनुपदमेव वक्ष्यमाणप्रकारेण निर्विकल्पकस्मरणोपगममन्तरेणैव विशिष्टस्मरणे विशेषणज्ञानहेतुतायां व्यभिचारवारणसम्भवेन निर्विकल्पकस्मरणकल्पनमप्रामाणिकमेवेति चेत्—

अत्राहुः–तत्प्रकारकज्ञानत्वमपेक्ष्यागुरोस्तत्प्रकारकप्रत्यक्षत्वस्यैव विशेषणज्ञानजन्यतावच्छेदकत्वोपगमेन विशिष्टस्मरणे व्यभिचाराभावः। न च प्रत्यक्षत्वस्य तथात्वे तज्ज्ञानाभावदशायां तत्प्रकारकानुमित्याद्यापत्तिरनुमित्यादेर्विशेषणज्ञानजन्यतावच्छेदकानाक्रान्तत्वादिति वाच्यम्। तज्ज्ञानाभावदशायां तत्प्रकारकानुमितिशाब्दबोधादिजनकपरामर्शविशेषपदजन्यपदार्थोपस्थितिविशेषाद्यात्मककारणाभावेन तत्प्रकारकानुमित्याद्यापत्तेरभावात्।

अथानुमितौ विशेषणज्ञानस्याहेतुत्वे जलादिव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्याद्याकारकाप्रसिद्धसाध्यकपरामर्शात्पृथिव्यामितरभेद इत्याद्याकारकसाध्यविशेष्यकानुमित्युत्पत्तिसमये पृथिवी जलादिभिन्नेत्याद्याकारकसाध्यविशेषणकानुमितिर्दुर्वारा। न चेष्टापत्तिः पृथिव्यामितरभेदः पृथिवीतरभेदवतीत्याद्याकारकद्विविधविषयताशालिन्या अनुमितेरनुभवविरुद्धत्वात्। न च तादृशानुमितावन्वयव्याप्त्यवगाहिपरामर्शस्य हेतुतया तदभावादेव नापत्तिरिति वाच्यम्। व्यतिरेकव्याप्त्यवगाहिपरामर्शादपि स्वातन्त्र्येणेतरभेदोपस्थितिकाले साध्यप्रकारकानुमित्युत्पादेन तादृशपरामर्शघटितसामग्र्यास्तथाविधानुमित्युत्पादकत्वस्यावश्यं स्वीकरणीयतयाऽन्वयव्याप्त्यवगाहिपरामर्शरूपकारणविरहस्याकिञ्चित्करत्वादिति चेत्––

न। पृथिवी जलभेदवतीत्याद्याकारिकाया जलभेदत्वाद्यवच्छिन्नप्रकारिकाया अनुमितेर्जलभेदत्वादिविशिष्टवैशिष्ट्यावगाहितया तत्र च विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया जलभेदत्वादिप्रकारकज्ञानस्य हेतुतया तादृशकारणविरहादेव सा-

ध्यविशेष्यकानुमित्युत्पत्तिकाले साध्यप्रकारकानुमित्यापादनासम्भवात् । केवलं विशेष्ये विशेषणमितिरीत्या तथाविधानुमितेश्चाप्रसिद्धसाध्यकपरामर्शात्क्वचिदप्यनभ्युपगमेनादोषात् । न च यत्र जलभेदत्वादिना जलभेदाद्यतिरिक्तपदार्थज्ञानमस्ति तत्र विशेषणतावच्छेदकप्रकारकज्ञानसत्त्वात्पृथिवी जलभिन्नेत्याद्यनुमित्यापत्तिरिति वाच्यम् , तत्र तादृशानुमितेरिष्टत्वात् । न च तत्र वास्तवसाध्यज्ञानरूपप्रतिबन्धकासत्त्वेन साध्यस्य विशेष्यतया भानसम्भवादेकविधपरामर्शाद्द्विविधविषयताशालिन्या अनुमितेरापत्तिः । इष्टापत्तौ चानुभवविरोध इति वाच्यम् । साध्यतावच्छेदकरूपेण यत्किञ्चिद्विषयकज्ञानस्यैव साध्यविशेष्यकानुमितिविरोधितया साध्यस्य विशेष्यतया भानासम्भवात् । अत एव भेदत्वादिप्रकारेण घटाद्यवगाहिप्रसिद्धेरपि विरोधित्वम् ।

यत्तु तत्प्रकारकानुमितित्वावच्छिन्नं प्रति विशेषणज्ञानस्य हेतुत्वान्तरकल्पनया नोक्तापत्तिः ज्ञानत्वस्य तज्जन्यतावच्छेदकत्वे तस्य नित्यसाधारणतया जन्यत्वविशेषितस्यैव तथात्वं स्वीकरणीयम् । नित्यवृत्तिधर्मस्य कार्यतानवच्छेदकत्वादिति जन्यत्वज्ञानत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण कारणतावृद्धिरवच्छेदकगौरवं चेति तदपेक्ष्यानुमितौ विशेषणज्ञानस्य हेतुत्वान्तरकल्पनाया एवौचित्यादिति—

तदसत् । उक्तरीत्यैवोपपत्तौ तादृशहेतुत्वान्तरकल्पने मानाभावात् । नित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वे क्षतिविरहाच्चेति ।

अत्र प्रत्यवतिष्ठन्ते बहवः—तत्प्रकारकप्रत्यक्षत्वस्य विशेषणज्ञानजन्यतावच्छेदकत्वे तत्प्रकारकत्वप्रत्यक्षत्वयोर्विशेष्य-

विशेषणभावे विनिगमनाविरहेण कार्य्यकारणभावद्वयप्रसङ्गोऽव-च्छेदकगौरवं चेति तदपेक्षया तत्प्रकारकत्वस्यैव विशेषणज्ञान-जन्यतावच्छेदकत्वमुपेयते लाघवात् । एवं च विशिष्टस्मरणप्रा-क्काले निर्विकल्पकात्मकस्मरणोपगम आवश्यकः । अन्यथा व्यभिचारप्रसङ्गात् । अथैवमपि यत्र फलसाधनताज्ञानफलेच्छो-पायेच्छाकृतीनां क्रमेणोत्पादस्तत्र तत्प्रकारककृत्यव्यवहितप्रा-क्क्षणे तज्ज्ञानाभावेन व्यभिचारात्तत्प्रकारकत्वस्य जन्यताव-च्छेदकत्वासम्भवः । न च घटादिगोचरकृतिं प्रति घटादिजन-कत्वेन कपालादिरूपोपादानप्रत्यक्षस्य जनकत्वात्तादृशज्ञानोत्पा-दकस्यान्तरावश्यं स्वीकरणीयतया न व्यभिचार इति वाच्यम् । उद्देश्यतया सुखत्वादिविशिष्टफलस्यापि कृतिविषयतया सुख-त्वादिज्ञानस्य कृतिपूर्वं नियमतोऽसत्त्वेन व्यभिचारवारणासम्भ-वात् । न च कृतिपूर्वं सुखत्वादिरूपफलतावच्छेदकप्रकारकस्मृ-तेर्नियमतः कल्पनान्न व्यभिचार इति वाच्यम् । तथा सति ता-दृशस्मरणोपादानप्रत्यक्षफलेच्छानां युगपदवस्थानासम्भवेन कृत्यु-त्पादासम्भवादिति चेत्—

न। गुणमानसजनकतावच्छेदकतया सिद्धस्य संस्कारव्या-वृत्तज्ञानेच्छादिसाधारणवैजात्यस्यैव कारणतावच्छेदकत्वेनो-क्तस्थले फलेच्छाया एव फलतावच्छेदकसुखत्वादिविषयिण्याः सत्त्वेन कृतौ व्यभिचाराभावात् । अथ तत्प्रकारकत्वस्य जन्य-तावच्छेदकत्वे तस्येश्वरज्ञानसाधारण्येन जन्यत्वनिवेशस्याव-श्यकतया गौरवम् । न च भवन्मतेऽपि प्रत्यक्षत्वस्येश्वरज्ञानसा-धारण्येन जन्यत्वनिवेश आवश्यक इति वाच्यम् । अस्मन्मते ईश्वरप्रत्यक्षव्यावृत्तजन्यप्रत्यक्षमात्रवृत्तिप्रत्यक्षत्वावान्तरजातेरेव जन्यतावच्छेदकत्वोपगमेन नित्यसाधारण्यविरहादिति चेत्—

न । नित्यसाधारणधर्मस्यापि जन्यतावच्छेदकत्वे क्षतिविरहेण तत्प्रकारकत्वस्य जन्यतावच्छेदकत्वेऽपि जन्यत्वानिवेशादिति ।

अत्र वदन्ति–घटत्वादिविषयाविशेषं निवेश्य घटत्वप्रकारकप्रत्यक्षत्वाद्यवच्छिन्नं प्रति घटत्वादिज्ञानत्वेनात्मनिष्ठप्रत्यासत्त्या हेतुत्वे तदानन्त्यप्रसङ्गेन गौरवमिति प्रकारतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति विषयतासम्बन्धेन ज्ञानत्वेनैव विषयविशेषमनिवेश्य विषयनिष्ठप्रत्यासत्त्या हेतुत्वं कल्प्यते लाघवात् । एवं च तत्प्रकारकत्वप्रत्यक्षत्वयोरेकत्रानिवेशेन विशेष्यविशेषणभावे विनिगमनाविरहासम्भवादवच्छेदकगौरवाभावाच्च । स्मरणसाधारणतत्प्रकारकत्वस्यावच्छेदकत्वं स्वीकृत्य विशिष्टस्मरणप्राक्काले निर्विकल्पकात्मकस्मरणकल्पनमत्यन्तमनुचितमेवेति दिक् ।

## अथ सविकल्पकवादः ।

सविकल्पकं च प्रत्यक्षसिद्धमेव । तस्य घट इत्याद्याकारसविकल्पकविचारः कस्य घटमहं जानामीत्याद्याकारकानुव्यवसायग्राह्यत्वात् ।

भट्टास्तु–सविकल्पकं न प्रत्यक्षसिद्धं । निर्विकल्पकस्य प्रत्यभट्टानां मतं क्षवारणाय प्रत्यक्षे निर्विकल्पकत्वेन प्रतिबन्धकत्वे सविकल्पकविषये गौरवेण ज्ञानत्वेनैव प्रतिबन्धकताया ज्ञानमात्रस्यातीन्द्रियत्वात्, किन्तु ज्ञाततालिङ्गकानुमानग्राह्यम् । ज्ञातता चातिरिक्ता । ज्ञातो घट इत्यादिप्रत्यक्षसिद्धेत्याहुः–

तन्न । ज्ञातो घट इत्यादिप्रत्यक्षस्य ज्ञानविषयतावगाहितयोज्ञातताखण्डनम् पपत्तावतिरिक्तज्ञाततायां मानाभावात् । न च घटं जानातीत्यादौ घटादेः क्रियाजन्यफलशालित्वरूपकर्मत्वो-

पपत्तये ज्ञानजन्या घटादिनिष्ठा साऽवश्यमुपेयेति वाच्यम् । एव-मप्यतीतानागतघटादिस्थले तस्यैवासत्वाज्ज्ञाततोत्पत्त्यसम्भवेन निरुक्तकर्मत्वानुपपत्तितादवस्थ्यात् । न चातीतानागतघटादेरपि सूक्ष्मरूपेण सत्त्वान्नानुपपत्तिरिति वाच्यम् । सूक्ष्मरूपेण सत्त्वस्य सत्कार्यवाद(१)पर्यवसन्नतया तस्याग्रे निरसनीयत्वात् । न च तत्र विषयत्वरूपगौणकर्मत्वेन निर्वाह इति वाच्यम् । विद्यमान-घटस्थलेऽपि तेनैव निर्वाहादतिरिक्तज्ञाततोपगमे इष्टो घटः कृतो घट इत्यादिप्रत्यक्षेणेष्टतादेरप्यतिरिक्तस्योपेयतापत्तेरिति दिक् ।

प्रभाकरमते ज्ञानस्वरूपविचारः

अत्र त्रिपुटीप्रत्यक्षवादिनो(२) गुरवः(३)–ज्ञानं नानुव्यवसायग्राह्यं किन्तु स्वप्रकाशम् । तत्त्वं च स्वात्मकप्रत्यक्षविषयत्वम् । एवं च घट इत्याद्याकारक-व्यवसाय एव घटमहं जानामीत्याद्याकारकः । अत एव मि-तिमातृमेयानामेकदैव भावात् त्रिपुटीप्रत्यक्षवादः । त-स्य च मितिमात्रंशे सर्वत्र प्रत्यक्षरूपतैव । मेयांशे च क्वचित्प्रत्य-क्षरूपता । यथा प्रत्यक्षे क्वचिच्चानुमित्यादिरूपता यथानुमित्यादौ । न चैवमांशिकतया प्रत्यक्षत्वादीनां जातित्वं न स्यादिति वा-च्यम् । अस्माभिर्गुणगतजात्यनङ्गीकारेणेष्टापत्तेः । न च तर्हि

---

(१) सांख्यानां नये कार्यं कारणे कारणव्यापारात्पूर्वमप्यनभि-व्यक्तदशायां वर्त्तत एव । तथा चाहुः–

असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥

(२) सर्वस्य ज्ञानस्य मितिमातृमेयविषयकत्वात् त्रिपुटीप्रत्य-क्षतेति प्रभाकराः । न ज्ञानमात्रे मितिमातृमेयानां त्रयाणां वर्त्तमान-त्वात् त्रिपुटीत्युक्तम् ।

(३) गुरवः—प्रभाकरस्य 'गुरुः' इत्युपाधिः ।

किं प्रत्यक्षत्वमिति वाच्यम् । साक्षात्कारित्वव्यंजकतयाभिमतस्य विषयताविशेषस्यैव प्रत्यक्षत्वात् । स च वह्न्याद्यनुमितौ न वह्न्याद्यंशेऽपि तु मितिमात्रंशे एव । मितिमात्रनुमितौ च तदंशेऽपीति न कोऽपि दोषः । न चैवं प्रत्यक्षविषयतायाः स्वजनकसंनिकर्षाश्रयत्वव्याप्यतानियमभङ्गापत्तिः । गुरुमते(१)ज्ञाननिष्ठसन्निकर्षस्य प्रत्यक्षाजनकतया प्रत्यक्षविषयज्ञानस्य स्वजनकसन्निकर्षानाश्रयत्वादिति वाच्यं, तादृशनियमस्याप्रयोजकत्वात् । न च ज्ञानस्य स्वप्रकाशत्वे मानाभाव इति वाच्यम् । स्वविषयकज्ञानान्तराकल्पनप्रयुक्तलाघवादेव तत्सिद्धेः । न चैवमिच्छादीनामपि स्वप्रकाशता स्यात्तत्राप्युक्तरीत्या लाघवसम्भवादिति वाच्यम् । व्यवहारे व्यवहर्त्तव्यगोचरज्ञानस्य हेतुतयेच्छादीनां ज्ञानाभावे तेषां व्यवहारानुपपत्त्याऽनुव्यवसायस्वीकारस्यावश्यकतया स्वप्रकाशतायां मानाभावात् । अन्यथा सर्वत्र ज्ञानस्यैव विषयसाधकतयेच्छादीनामेवासिद्ध्यापत्तेः । स्मरणस्य समानाकारज्ञानसाध्यतयेच्छादिस्मरणानुरोधेन तदनुव्यवसायस्वीकारस्यावश्यकत्वाच्च ।

अथेच्छादिप्रत्यक्षस्थले क्लृप्तायामात्मसमवेतप्रत्यक्षे मनःसंयुक्तसमवायहेतुतायां गुरुमते ज्ञानप्रत्यक्षे व्यभिचारः । विषयतासम्बन्धेन प्रत्यक्षाधिकरणे स्वस्मिन् स्वाव्यवहितपूर्वक्षणावच्छेदेन मनस्संयुक्तसमवायस्याभावादिति चेत्—

न । स्वाव्यवहितपूर्वक्षणावच्छेदेन ज्ञाने मनस्संयुक्तसमवायस्येव तदभावस्याप्यसत्त्वात् । न च तादृशक्षणावच्छेदेन तादृशसमवायरूपप्रतियोग्यसत्त्वे तदभावसत्त्वे बाधकाभाव इति वाच्यम् । स्वाव्यवहितपूर्वक्षणस्यावच्छेद्याधिकरणीभूतस्वासम्ब-

(१) प्रभाकरमते ।

द्धतया स्वनिष्ठमनस्संयुक्तसमवायस्यैव स्वनिष्ठतदभावस्याप्यवच्छेदकत्वासंभवात्। अत एवेच्छाविषयीभूतानागतपाकादौ तदव्यवहितपूर्वक्षणावच्छेदेन विशेष्यतया ज्ञानासत्त्वेऽपि ज्ञानेच्छयोः समानविषयतया हेतुहेतुमद्भावः संगच्छते। अथैवमपीच्छात्वादिप्रत्यक्षस्थले आत्मसमवेतसमवेतमानसं प्रति मनःसंयुक्तसमवेतसमवायस्य हेतुतायाः क्लृप्ततया तत्र ज्ञानत्वादिप्रत्यक्षे व्यभिचारो दुर्वारः। तदव्यवहितपूर्वक्षणे मनस्संयुक्तसमवेतज्ञानाभावेन विषयतया कार्याधिकरणे ज्ञानत्वादौ तदव्यवहितपूर्वक्षणावच्छेदेन तादृशसमवायाभावसत्त्वात्। तादृशक्षणस्यावच्छेद्याधिकरणज्ञानत्वसम्बद्धतयाऽवच्छेदकत्वसंभवादिति चेत्--

न। तादृशसन्निकर्षजन्यतावच्छेदकघटकमानसत्वस्य घटमहं जानामीत्याद्याकारकबाह्यघटादिगोचरव्यवसाये ज्ञानत्वाद्यवगाहिन्यपि ज्ञानत्वाद्यंशेऽनुपगमेन व्यभिचाराभावात्। न चैवमप्यहं सुखीत्यादिमानसस्यापि स्वप्रकाशतया तत्र ज्ञानत्वाद्यंशेऽपि मानसत्वाद्व्यभिचारो दुर्वार इति वाच्यम्। क्रियादीनां संयोगादौ हेतुत्वानुरोधेन कार्यतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्तेर्यावदधिकरणे कारणाभावसत्त्वस्यैव व्यभिचारतया तादृशमानसाधिकरणे सुखत्वादौ तदव्यवहितप्राक्क्षणे तादृशकारणसत्त्वेन तद्विषयीभूतज्ञानत्वादौ तदसत्त्वेऽपि व्यभिचाराभावात्।

अथ कामिनीजिज्ञासाकालीनकामिनीज्ञानस्य स्वप्रकाशत्वमनुपपन्नं, कामिनीजिज्ञासाकाले घटादिज्ञानवारणाय कामिन्यन्यज्ञाने तस्याः प्रतिबन्धकत्वादिति चेत्--

न। रूपविशिष्टकामिनीजिज्ञासादिकालीनरूपविशिष्टकामिनीज्ञाने व्यभिचारवारणाय प्रतिबध्यतावच्छेदककामिन्यन्यविषयतायां साक्षात्परम्परया कामिनीविषयत्वानिरूपितत्वस्य

निवेश्यतया कामिनीविषयतानिरूपितज्ञानादिविषयताकस्वप्रकाशकामिनीज्ञानेऽनुपपत्त्यभावादिति वदन्ति--

तदसत् । स्वपूर्वकाले स्वज्ञानरूपविशेषणज्ञानाभावेनात्मांशे विशेषणतया स्वज्ञानासंभवेन स्वप्रकाशवादासंभवात् । न च तन्मते विशिष्टबुद्धौ विशेषणज्ञानस्याहेतुत्वान्न दोष इति वाच्यम् । स्वरूपतो घटत्वादिप्रकारकज्ञानस्य कादाचित्कत्वनिर्वाहाय स्वरूपतो घटत्वादिविशिष्टबुद्धौ स्वरूपतस्तज्ज्ञानस्य हेतुतायाः पूर्वं व्यवस्थापनात् । न च घटत्वादिज्ञानस्य तद्विशिष्टबुद्धौ हेतुत्वेऽपि गुरुमते ज्ञानत्वादिविशिष्टबुद्धौ ज्ञानत्वादिज्ञानस्य न हेतुत्वम् । ज्ञानमात्रस्यैव तन्मते ज्ञानत्वप्रकारकत्वादिति वाच्यम् । सामान्यतः प्रकारतासम्बन्धेन ज्ञानं प्रति विषयतासम्बन्धेन ज्ञानस्य लाघवेन हेतुतया ज्ञानत्वादिविशिष्टबुद्धावपि तज्ज्ञानस्यावश्यमपेक्षणात् ।

किं च घटादिप्रत्यक्षादावनुमित्यादिविशिष्टायाः पर्वतो वह्निमानित्याद्यनुमित्यादिसामग्र्याः प्रतिबन्धकत्वस्य विषयभेदभिन्नत्वे गौरवापत्त्या वह्निमत्पर्वतादिभिन्नविषयकप्रत्यक्षादौ तादृशसामग्र्या एकमेव प्रतिबन्धकत्वं कल्प्यते लाघवात् । एवं च तादृशसामग्रीकालीनेच्छाधीनपर्वतो वह्निमानितिलौकिकप्रत्यक्षादौ मितिमात्रादिभानासंभवेन स्वप्रकाशवादासम्भवः । न च वह्निमत्पर्वतादिभिन्नविषयकत्ववह्निमत्पर्वतादिविषयताशून्यत्वयोस्समशरीरतया वह्निमत्पर्वतादिविषयताशून्यप्रत्यक्षत्वादेरेव तादृशसामग्रीप्रतिबध्यतावच्छेदकतया तादृशसामग्रीकालीनवह्निमत्पर्वतादिप्रत्यक्षादेस्तदनाक्रान्ततया तत्र ज्ञानादिभाने बाधकाभाव इति वाच्यम् । तथा सति तादृशसामाग्र्यभावकाले वह्निमत्पर्वतादिप्रत्यक्षादौ जाय-

माने तादृशसामग्र्यभावरूपकारणबलात्तादृशविषयताशून्यप्रत्यक्षाद्यापत्तेः। अथ पर्वतो वह्निमानितिलौकिकप्रत्यक्षादेरपि वह्निमत्पर्वतादिभिन्नवह्न्यादिविषयताशालित्वेन प्रतिबध्यत्वापत्त्या वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकान्यनिरूपितविषयताकत्वमेव न्यायविद्भिरपि प्रतिबध्यतावच्छेदकं वाच्यम्। एवं च तत्र ज्ञानादिभाने बाधकाभाव इति चेत्—

न। एवमपि ज्ञानभेदेन विषयताभेदे मानाभावेन गुरुमते तादृशप्रत्यक्षस्योपदर्शितविशेष्यताकान्यघटादिज्ञाननिरूपितज्ञानादिविषयताकत्वेन प्रतिबध्यतावच्छेदकाक्रान्ततया तत्र ज्ञानादिभानासम्भवस्य ब्रह्मणो दुरुद्धरत्वात्।

नवीनास्तु-गुरुमते ज्ञानमात्रस्यैव मितिमात्रादिविषयकत्वे यत्र कारणतावच्छेदककोटौ कार्यतावच्छेदककोटौ वा समवायेन ज्ञानत्वस्य निवेशस्तत्रैव लौकिकविषयतासम्बन्धेन ज्ञानत्वस्यात्मत्वस्य च निवेशमादाय विनिगमनाविरहमयुक्तम्। तन्मते कार्यकारणभावबाहुल्यम्।

एवं नैयायिकमते धूमवत्पर्वतज्ञानवानहमित्यादिशाब्दबोधं प्रति धूमादिलिङ्गकपर्वतादिपक्षकानुमितिसामग्र्याः प्रतिबन्धकत्वे बाधाभावादिघटिततथाविधानुमितिकारणकलापस्य न निवेशः अपि तु धूमविशिष्टपर्वतादिविषयकज्ञानमात्रस्यैव। तादृशज्ञानकाले तथाविधानुमितेर्बाधाभावादिरूपेतरकारणासत्त्वेऽपि समानविषयकलौकिकप्रत्यक्षसामग्रीसत्त्वेन तत्काले तथाविधशाब्दबोधानुदयात्।

प्राभाकरमते तु धूमविशिष्टपर्वतादिज्ञानदशायां तादृशानुमितिजनकबाधाभावाद्यसत्वे तथाविधशाब्दबोधोऽवश्यमुत्पद्यते। धूमवान् पर्वत इत्याकारकज्ञानस्यैव धूमवत्पर्वतमहं जानामीत्या-

कारकप्रत्यक्षतया तदुत्तरकाले तथाविधप्रत्यक्षानुदयेन तदानीं शाब्दबोधसमानविषयकप्रत्यक्षसामग्रीविरहादतस्तदुपपत्तये बाधाभावादिरूपेतरकारणान्यपि तादृशशाब्दबोधस्थलीयतथाविधानुमितिसामग्रीप्रतिबन्धकतायामवश्यं निवेशनीयमिति महद्गौरवम् । न च घटादिविषयकशाब्दस्थलीयप्रतिबन्धकतायां तादृशकारणकलापनिवेशस्योभयमतसिद्धतया तत्रैव शाब्दत्वस्य प्रतिबोध्यतावच्छेदकत्वान्नोपदर्शितशाब्दबोधस्थलेऽतिरिक्तप्रतिबन्धकत्वमिति क्व गौरवमिति वाच्यम् । इच्छाया उत्तेजकत्वानुरोधेनातिरिक्तप्रतिबन्धकत्वस्यावश्यकत्वादित्याहुः—

तदसत् । विषयभेदेनैव विषयताया भेदेन ज्ञानसंस्काराद्योर्विषयताभेदस्याप्रामाणिकतया लौकिकविषयतासम्बन्धेन ज्ञानत्वस्यात्मत्वस्य च संस्कारादावपि सत्त्वेनातिप्रसक्ततया तस्यावच्छेदकत्वासंभवस्यैव विनिगमकतयोक्तविनिगमनाविरहप्रयुक्तकारणताबाहुल्यासंभवात् ।

एवमित्यादिनोक्तं द्वितीयदूषणमपि मन्दम् । घटादिशाब्दसामग्रीस्थलीयोक्तानुमितिसामग्रीप्रतिबध्यतायां तादृशसामग्रीविशिष्टान्यत्वानिवेशेनैवेच्छाकालीनज्ञाने व्यभिचाराभावेनोक्तसामग्रीप्रतिबन्धकतायामिच्छाया उत्तेजकत्वानुपगमेनोत्तेजकत्वानुरोधेन तत्रातिरिक्तप्रतिबन्धकताकल्पनाभावात् । न चैवमिच्छाकाल इव तदभावकालेऽपि तादृशसामग्रीविशिष्टज्ञानापत्तिरिति वाच्यम्, तादृशसामग्रीविशिष्टज्ञाने इच्छाया हेतुत्वेन तदभावेनापत्त्यभावात् । न चेच्छाहेतुत्वमेवाधिकमिति वाच्यं, तुल्ययुक्त्या घटादिशाब्दादौ विरोधिसामग्र्यन्तरप्रतिबन्धकतायामपीच्छाया उत्तेजकत्वानभ्युपगमेनेच्छाधीनप्रत्यक्षे व्यभिचारवारणाय विरोधिसामग्र्यन्तरविशिष्टान्यत्वस्य प्रतिबध्यताव-

च्छेदकतयेच्छाभावकाले विरोधिसामग्र्यन्तरविशिष्टज्ञानवारणाय विरोधिसामग्र्यन्तरविशिष्टघटादिशाब्दादौ तादृशेच्छाया हेतुत्वे कल्पनीये विरोधिसामग्र्यन्तरवैशिष्ट्यमनिवेश्य तादृशेच्छाविशिष्टत्वस्यैव जन्यतावच्छेदकत्वोपगमेन तद्धेतुतयैवोपपत्तावुक्तानुमितिसामग्रीविशिष्टघटादिशाब्दादौ तादृशेच्छाया हेतुत्वान्तराकल्पनात् ।

अथ नैयायिकमते भिन्नविषयकानुमित्यादिसामग्रीदशायां ज्ञानानुव्यवसायवारणाय तत्रानुमितिसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवम् । स्वप्रकाशमते तस्याप्रसिद्ध्याऽपत्त्यभावेन न तदिति लाघवमिति स्वप्रकाशवादिगुरुमतमेव सम्यगिति चेत्—

न । उपदर्शितरीत्या स्वप्रकाशवादासंभवेनागत्या नैयायिकमते तादृशगौरवस्य प्रामाणिकतयादोषत्वात् ।

वस्तुतस्तु इच्छाद्यनुव्यवसाये तादृशसामग्र्याः प्रतिबन्धकत्वस्य गुरूणामप्यावश्यकतया तत्र मानसत्वस्यैव प्रतिबध्यतावच्छेदकत्वोपगमेन ज्ञानानुव्यवसायेऽतिरिक्तप्रतिबन्धकत्वं नैयायिकानामपि नास्त्येव ।

न चे(१)च्छाया उत्तेजकत्वानुरोधेन तदावश्यकमिति वाच्यम्, उपदर्शितरीत्या तादृशसामग्रीविशिष्टान्यत्वस्य प्रतिबध्यतावच्छेदकत्वोपगमेनेच्छाया उत्तेजकत्वस्याकल्पनात् । विषयत्वाविषयि(२)त्वोभयसम्बन्धेनेच्छावदन्यमानसत्वस्य प्रतिबध्यतावच्छेदकत्वेनैव विरोधिसामग्रीकाले इच्छाधीनमानसोपप-

(१) नन्विति'ख' पुस्तकपाठः ।
(२) स्वाव्यवहितोत्तरत्वेति 'ख'पुस्तकटिप्पण्यां पाठः ।

त्तौ कुत्रापि मानसस्थलीयप्रतिबन्धकतायामिच्छाया उत्तेजकत्वाप्रसक्तेश्चेत्यलं विस्तरेण ।

निर्विकल्पक-विभागः

निर्विकल्पकं सर्वांशे किञ्चिदंशे चेति द्वेधा । तत्राद्यं प्राथमिकविशिष्टबुद्धिजनकं जागराद्यज्ञानादिरूपम् । द्वितीयं व्यवसायादिजन्यप्राथमिकज्ञानानुव्यवसायादिरूपम् । तस्य ज्ञानत्वाद्यंशे निर्विकल्पकरूपत्वात् । घटाद्यंशे सविकल्पकरूपत्वाच्च ।

सविकल्पक-विभागः

विशेषणोपलक्षणरूपप्रकारद्वैविध्येन सविकल्पकं द्वेधा ।

ननु विशेषणोपलक्षणयोर्द्वयोरपि ज्ञानप्रकारत्वाविशेषात्को भेद इति चेत्—

अत्र केचित्-तज्ज्ञानसमानकालीनत्वे सति तज्ज्ञानप्रकारो विशेषणम् । यथा गौर्द्रव्यं प्रमेयमित्यादिज्ञाने गोत्वद्रव्यत्वप्रमेयत्वादितज्ज्ञानासमानकालीनत्वे सति तज्ज्ञानप्रकार उपलक्षणम् । यथा गुरुणा टीका कुरुणा क्षेत्रमित्यत्र गुरुकुरू । अत एवे'त्थंभूतलक्षणे'तितृतीयाविधायकसूत्रेऽतीतार्थको निष्ठाप्रत्ययस्तेनेत्थंभूतस्यातीतस्य लक्षणसम्बन्धे बोध्ये तृतीयेति सूत्रार्थलाभ इत्याहुः ।

अन्ये तु यो यस्यां बुद्धौ यत्र प्रकारस्स तत्र विशेषणम् । यथा गौरित्यादौ गोत्वादिविशेषणोपस्थापकमविशेषणमुपलक्षणम् । यथा काकवन्तो देवदत्तगृहा इत्यादौ देवदत्तगृहादौ विशेषणीभूय भासमानस्योतृण(?)त्वादेरुपस्थापकः । स्वयमविशेषणं काकादिः । न चैवमनुमितौ लिङ्गस्य शाब्दबोधे च पदस्योपलक्षणत्वापत्तिरिति वाच्यम्, इष्टत्वादित्याहुः ।

अपरे तु विशेष्ये साक्षात्संसृष्टं विशेषणं परंपरया संसृष्ट-

मुपलक्षणम् । यथा दण्डी पुरुष इत्यत्र पुरुषे दण्डो विशेषणं दण्डत्वमुपलक्षणम् । तदुक्तमभियुक्तैः—

"व्यावर्तनीयमधिगच्छति यद्धि साक्षा-
देतद्विशेषणमतो विपरीतमन्यत् ।
दण्डी पुमानितिविशेषणमत्र दण्डः
पुंसो न जातिरनुदण्डमसौ च तस्य"

इति व्यावर्त्तनीयम् । विशेष्यं अनुदण्डं दण्डमनुगता दण्डत्वजातिर्न पुंसो विशेषणं किं त्वसौ दण्डस्येत्यर्थ इत्याहुः । विशेष्यान्वयिना यदन्वेति तद्विशेषणं तद्भिन्नमुपलक्षणमित्यप्याहुः ।

मणिकारानुयायिनस्तु प्रत्याय्यव्यावृत्त्यवच्छेदकं विशेषणम् । यथा गौरित्यादौ गोत्वादिप्रत्याय्याया अगोव्यावृत्त्यादेरवच्छेदकम् । प्रत्याय्यव्यावृत्त्यनवच्छेदकत्वे सति प्रत्याय्यव्यावृत्तिसमानाधिकरणमुपलक्षणम् । यथा जटाभिस्तापस इत्यादौ जटादिः । अत्र हि प्रत्याय्याया अतापसादिव्यावृत्तेः शमदमादिमत्वमेवावच्छेदकं न तु जटादिः । अन्यूनानतिरिक्तवृत्तेरवच्छेदकत्वात् । यथा वा काकवन्तो देवदत्तस्य गृहा इत्यादौ काकादिप्रत्याय्याया देवदत्तगृहादिभिन्नव्यावृत्तेः, काकाद्यनवच्छेद्यत्वात् । काकाद्यसत्वेऽपि उतृण(?)त्वादेरवच्छेदकतयैव तथाप्रयोगात् । अत्र प्रत्यक्षे जटाकाकादिस्मारितस्य शाब्दबोधे च जटाकाकादिपदलक्ष्यस्य शमदमादिमत्वोतृणत्वादेर्विशेषणतया भानम् । कदाचिज्जटादेरपि भानमुपलक्षणतया । नचैवं प्रमेयमित्यादौ प्रमेयत्वादेः कथं प्रकारत्वं तस्य निरुक्तव्यावृत्तिघटितविशेषणत्वोपलक्षणत्वयोरसंभवादिति वाच्यम् । प्रकारस्य विशेषणोपलक्षणाव्यावर्त्तकभेदेन त्रिविधतया प्रमेयत्वादेर्विशेषणोपलक्षणयोरनन्तर्भावेऽपि तृतीयप्रकारेऽन्तर्भावात् ।

न चैवं प्रकारो द्विविध इति मणिकारोक्तिविरोध इति वाच्यम्, तत्रत्यप्रकारपदस्य व्यावर्त्तकप्रकारपरत्वात् ।

अत एव मिश्रैः(१) प्रकारो द्विविध इति प्रतीकमुपादाय व्यावर्त्तक इति शेष इत्युक्तम् । एवं च सामान्यतः प्रकारो व्यावर्त्तकाव्यावर्त्तकभेदेन द्विविधः । व्यावर्त्तकोऽपि विशेषणोपलक्षणभेदेन द्विविध इति फलितमित्याहुः ।

नवीनास्तु व्यावृत्तिबोधकाले विद्यमानं सद्व्यावर्त्तकं विशेषणं तदाऽविद्यमानं सद्व्यावर्त्तकमुपलक्षणं भासमानमव्यावर्त्तकमुपरञ्जकमिति प्रकारत्रैविध्यम् । शमादिजटादिप्रमेयत्वादिक्रमेण लक्ष्यम् । मीमांसकानां ज्ञानादौ जन्यत्वाद्युपरञ्जकमेव । जटादेर्व्यावृत्तिबोधकत्वं च परम्परया जटादिस्मारितशमादिस्मारितायाः अतापसादिव्यावृत्तेर्बोधात् । प्रमेयत्वादिकं तु न तथेत्युपरञ्जकमिति प्राहुः ।

नन्वेवमपि डित्थोऽयमित्यादिसंज्ञाविशिष्टसंज्ञ्यादिसविकल्पके संज्ञ्यादेः कथं विशेषणत्वम् । पूर्वानुपस्थितस्य तस्य तत्र प्रकारत्वासंभवादिति चेत्—

अत्र केचित्—संज्ञिविषयकज्ञानात्रिषयस्यापि संज्ञादेः तज्ज्ञानविषयतावच्छेदकतयैव संज्ञिनि संज्ञाया विशेषणत्वं क्व चिद्विशिष्टसंबद्धासम्बन्धिनोऽपि तत्सम्बन्धितावच्छेदकतया तद्वति विशेषणत्वात्(२) । अत एव द्वित्वनाशकालीनायां द्वे द्रव्ये इति बुद्धौ न द्वित्वविषयकत्वमपि तु द्वित्वविशिष्टविषयकत्वमेव ।

(१) वाचस्पतिमिश्रैः ।

(२) 'तद्वति विशेषणत्वोपगमेन तटस्थज्ञानविषयतैव विषयतावच्छेदकत्वात्सञ्ज्ञादेः (र?) प्रकारस्य ज्ञानविषयविशेषणत्वादिति 'ख' पुस्तकपाठः ।

द्वित्वरूपविशेषणधीजन्यत्वादित्याचार्यै(१)रुक्तामित्याहुः ।

वैयाकरणानुयायिनस्तु निर्विकल्पके संज्ञावैशिष्ट्यभानेऽपि संज्ञाभानमस्त्येव सर्वेषामर्थानां नामधेयात्मकत्वादिति संज्ञाविशिष्टसंज्ञादिसविकल्पके संज्ञादेर्विशेषणत्वं निष्प्रत्यूहम् । तदुक्तं(२)--

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" ॥ इति ।

अत एव बालमूकादिज्ञानमपि शब्दसंभिन्नार्थविषयकमेव । तदुक्तम्(३)--

"आद्यः कारणविन्यासः प्राणस्योर्ध्वं समीरणम् ।
स्थानानामभिघातश्च न विना शब्दभावनाम्" ॥

अत एव घटोऽयमित्यादिसामानाधिकरण्यमप्युपपद्यते । आद्य इति बालस्य प्राथमिक इन्द्रियादिव्यापार इत्यर्थ इत्याहुः(४)-

तदसत् । शब्दार्थयोरभेदे अन्धबधिरादेः रूपशब्दादिसाक्षात्कारापत्तेः । घटनीलादिपदसामानाधिकरण्यं तु घटादिशब्दानामुत्सर्गतोऽर्थपरतया भिन्नरूपाभ्यामेकधर्मिबोधकत्वादुपपन्नम् ।

अत्राहुः-धर्मधर्मिनिर्विकल्पकाद्युद्बुद्धसंस्कारात्संज्ञायाः स्मरणे सविकल्पके तदुपनीतभानसंभवेन संज्ञाविशिष्टसंख्यादिसविकल्पके संज्ञादेर्विशेषणत्वोपपत्तिः । तदुक्तं—

---

(१) उदयनाचार्यैः।

(२) भर्तृहरिणा वाक्यपदीये प्रथमकाण्डे १२४ कारिकायाम् ।

(३) वाक्यपदीये प्रथमकाण्डे १२३ कारिकायाम् ।

(४) तदुक्तं तट्टीकायां पुण्यराजेन—प्रथमोत्पन्नस्य बालस्यायमिन्द्रियविन्यासादि उपदेशाभावेऽपि ज्ञानसाध्यं जायमानं दृश्यते ।

यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् ।
पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षमः ॥

इतीतिविशिष्टबुविशिदिष्टवैशिष्ट्यबुद्धिभेदादपि सविकल्पकं द्वेधा । घटत्वादिविशिष्टबुद्ध्यात्मकमयं घट इत्यादिकमाद्यम् । द्वितीयं चतुर्द्धा—विशिष्टस्य वैशिष्ट्यं, विशेष्ये विशेषणम् , तत्र विशेषणान्तरं विशिष्टे वैशिष्ट्यम्, एकत्र द्वयमितिभेदात् । तत्र विशिष्टपर्याप्तप्रकारताकबुद्धित्वं, विशिष्टवैशिष्ट्यबुद्धित्वम् । रक्तदण्डवान्पुरुष इत्यादौ रक्तत्वविशिष्टं दण्डादौ व्यासज्यवृत्तिस्तत्पर्याप्तिका प्रकारता । अपरा तु अव्यासज्यवृत्तिः प्रत्येकपर्य्याप्ता । आद्या विशिष्टवैशिष्ट्यविषयता । द्वितीया च विशेष्ये विशेषणमित्यादिविषयता । एवं विशिष्टपर्याप्तविशेष्यताकत्वं विशिष्टे वैशिष्ट्यबुद्धित्वं रक्तो दण्डः प्रमेय इत्यादौ व्यासज्यवृत्तिरेका विशेष्यता । अपरा त्वव्यासज्यवृत्तिः । आद्या विशिष्टे वैशिष्ट्यविषयता । द्वितीयैकत्र द्वयमितिविषयता । वैशिष्ट्यं च वैज्ञानिकम् । तेन लोहितवह्निमानित्यादेस्संग्रहः । न चाद्यायां विषयतायां मानाभावः । महानसीयवह्निर्नास्तीत्यादौ महानसीयत्वादिविशिष्टं वह्नित्वं प्रतियोगितावच्छेदकं न तु केवलं वह्नित्वमिति प्रतीत्या व्यासज्यवृत्त्यवच्छेदकतावत् विशिष्टं प्रकारो न तु केवलमितिप्रतीत्या व्यासज्यवृत्तिविशिष्टप्रकारतासिद्धेरिति संप्रदायः ।

सविकल्पकभेदमाह

केचित्तु रक्तत्वदण्डत्वोभयावच्छिन्नप्रकारताविशिष्टवैशिष्ट्यविषयता रक्तत्वप्रकारतानिरूपितदण्डत्वावच्छिन्नप्रकारता विशेष्ये विशेषणमित्यादिविषयता तदुभयावच्छिन्नविशेष्यता विशिष्टे वैशिष्ट्यविषयता रक्तत्वप्रमेयत्वोभयप्रकारतानिरूपितदण्डत्वावच्छिन्नविषयतैकत्र द्वयमिति विषयतेत्याहुः ।

नवीनास्तु रक्तत्वाद्यवच्छिन्नप्रतियोगिताकत्वविशिष्टसंसर्गकत्वं विशिष्टवैशिष्ट्यबुद्धित्वम्। विशेष्ये विशेषणमित्यादिविषयताशालिबुद्धौ तु न विशिष्टसंसर्गकत्वम्। एवं रक्तत्वावाच्छिन्नाऽनुयोगिताकत्वविशिष्टसंसर्गकत्वं विशिष्टवैशिष्ट्यमिति बुद्धित्वम्। एकत्र द्वयमितिबुद्धौ च न विशिष्टसंसर्गकत्वमिति प्राहुः।

तत्र विशिष्टवैशिष्ट्यविषयताशालिबोधे विशेषणतावच्छेदकप्रकारकानिर्णयत्वेन विशिष्टे वैशिष्ट्यमितिबोधे विशेष्यतावच्छेदकप्रकारकानिर्णयत्वेन हेतुता विशेषणतावच्छेदकविशेष्यतावच्छेदकयोर्निर्विकल्पककाले संशयकाले च तदनुत्पादात्।

अत्र केचित् विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव हेतुता संशयानन्तरं तदनुत्पादवारणाय च तत्र विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावत्वेन स्वातंत्र्येण हेतुतोपपद्यते। न च प्रकारताद्वयकल्पनापेक्षया विशेषणतावच्छेदकप्रकारकानिर्णयत्वेनैककारणतैवोचितेति वाच्यम्। तथा सति विशेषणतावच्छेदकाभावप्रकारताशून्यत्वविशेषणतावच्छेदकप्रकारताशालित्वज्ञानत्वानां मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण कार्यकारणभावषट्कापत्तेरवच्छेदकगौरवाच्च। स्वातंत्र्येण विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावत्वेन विशेषणतावच्छेदकप्रकारकज्ञानत्वेन च हेतुतामते विनिगमनाविरहेण कार्यकारणभावचतुष्कादवच्छेदकलाघवाच्च। यदि च तादृशज्ञानाभावत्वेन स्वातंत्र्येण हेतुतामते भिन्नविषयकानुमित्यादिकं प्रतीच्छाघटिताविशिष्टवैशिष्ट्यबोधसामग्र्याः प्रतिबन्धकतायां सामग्रीमध्ये तादृशज्ञानाभावस्यापि निवेश्यतया तस्येतरकारणेनेच्छया च समं विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्धकताबाहुल्येन गौरवात्तादृशानिर्णयत्वेनैकहेतुताकल्पन-

मेवोचितमिति विभाव्यते । तथापि तादृशनिर्णयत्वेन हेतुतामते परामर्शादिकारणतायां प्रत्यक्षादिप्रतिबन्धकाभिन्नविषयकानुमितिसामग्रीघटकपरामर्शादौ च व्याप्त्याद्यंशे व्याप्त्यभावाप्रकारकत्वादिरूपनिर्णयत्वनिवेशे गौरवम् ।

अस्मन्मते च तत्र व्याप्तिविशिष्टवैशिष्ट्यविषयताया निवेशेन व्याप्त्याद्यंशे संशयात्मकपरामर्शे तदभावेनैवोपपत्तौ तदंशे निर्णयत्वाऽनिवेशेन लाघवं दुर्वारम् । न च निर्णयत्वेन हेतुतामतेऽपि तथा वाच्यमिति वाच्यम् । तन्मते विशेषणतावच्छेदकप्रकारकनिर्णयकालीनव्याप्त्यभावप्रत्यक्षेच्छाजन्यतादृशपरामर्शस्य विशिष्टवैशिष्ट्यविषयताशालित्वे बाधकाभावेन तथावक्तुमशक्यत्वात् । न च भवन्मतेऽपि तादृशपरामर्शस्य तादृशविषयताशालित्वे बाधकाभावेन तथावक्तुमशक्यत्वात् । न च भवन्मतेऽपि तादृशपरामर्शस्य तादृशविषयताशालित्वं बाधकाभाव इति वाच्यम् । अस्मन्मते विशेषणतावच्छेदकाभावप्रकारकज्ञानाभावस्य कार्यकालवृत्तितया हेतुत्वाभ्युपगमेन तादृशपरामर्शोत्पत्तिकाले च तदभावासत्वादेव तस्य विशिष्टवैशिष्ट्यविषयताशालित्वासम्भवात् । यदि च तादृशसंशयात्मकपरामर्शस्य व्याप्त्यभावाद्यंशे आहार्यतया तस्मादनुमित्युत्पत्त्याविष्टापत्त्या तादृशनिर्णयत्वेन हेतुतावादिनाऽपि तत्र व्याप्त्याद्यंशे निर्णयत्वं न निवेश्यत इति विभाव्यते । तथापि तादृशज्ञानाभावत्वेन हेतुतामते चाक्षुषादिरक्तदण्डवानित्यादिविशिष्टवैशिष्ट्यबोधे रक्तत्वाभावादिहेतुकदण्डादिपक्षकानुमिति सामग्र्याः प्रतिबन्धकत्वं न कल्प्यत इति लाघवं दुरुद्धरम् । तत्र तादृशसामग्रीकाले रक्तत्वाभावप्रकारकज्ञानस्यावश्यकत्वेन तादृशज्ञानाभावरूपकारणाभावादेव विशिष्टवैशिष्ट्यबोधापत्त्यसम्भवात् । न च निणर्यत्वेन हेतुतामतेऽपि तत्र बाधाभावरूपकारणा-

भावादेव विशिष्टवैशिष्ट्यबोधापत्त्यसम्भवेन न(१) तत्र तादृशसामग्रीप्रतिबन्धकत्व(२)मिति वाच्यम् । लौकिकसान्निकर्षजन्यज्ञानस्य बाधसामान्याप्रतिबध्यत्वेन बाधस्याकिञ्चित्करत्वादित्याहुः—

तदसत् । तादृशज्ञानाभावत्वेन हेतुतावादिनापि घटादिप्रत्यक्षे तादृशानुमितिसामग्र्याः प्रतिबन्धकत्वमवश्यं वाच्यमिति तत्रैव घटादिकमनिवेश्य प्रत्यक्षत्वावच्छिन्नं प्रत्येव प्रतिबन्धकत्वस्य कल्पनीयतया निर्णयत्वेन हेतुतामतेऽपि तादृशविशिष्टवैशिष्ट्यबोधे तादृशानुमितिसामग्र्याः प्रतिबन्धकत्वान्तरस्याभावात् । न चेच्छाया उत्तेजकत्वानुरोधेन घटादिनिवेश आवश्यक इति वाच्यम्। तादृशसामग्रीविशिष्टान्यत्वस्य प्रतिबध्यतावच्छेदककोटौ निवेशादेवेच्छाधीनप्रत्यक्षे व्यभिचाराभावेन गौरवादिच्छाया उत्तेजकत्वस्यैवाकल्पनात् । न चेच्छाकाले यादृशसामग्रीतः प्रत्यक्षं तादृशसामग्रीत इच्छाशून्यकालेऽपि प्रत्यक्षवारणायेच्छाया विशिष्य हेतुत्वस्यावश्यकतया तादृशविशिष्टवैशिष्ट्यबोधे इच्छायाः कारणत्वान्तरकल्पने गौरवमस्त्येवेति वाच्यम् । तादृशविशिष्टवैशिष्ट्यबोधे क्लृप्तवह्न्याद्यनुमितिसामग्रीप्रतिबन्धकतायामपीच्छाया अनुत्तेजकत्वेन(३) तत्र क्लृप्तेच्छाया हेतुतयैव निर्वाहेणेच्छाया हेतुत्वान्तराकल्पनात् ।

अत्र प्रत्यवतिष्ठन्ते नव्याः -विशिष्टवैशिष्ट्यबोधे ज्ञानत्वेनात्मत्वेनैव वा हेतुता। न चैवं विशेषणतावच्छेदकप्रकारकानिर्णयाभावेऽपि तदापत्तिरिति वाच्यम्। क्लृप्ततद्धेतुतयैव तदापत्तिविरहात् । तथा हि दण्डो रक्तत्वाभाववान् स्यादित्यापत्तौ दण्डो

(१) 'ख'पुस्तके 'ने'त्यस्य पाठो नास्ति ।
(२) 'प्रतिबन्धकत्वकल्पनमि'ति 'ख'पुस्तकपाठः ।
(३) 'उत्तेजकत्वेने'त्येव 'ख'पुस्तकपाठः ।

रक्तः, दण्डो रक्तत्वाभावाभाववानित्युभयविधनिर्णयस्यैवापाद्य व्यतिरेकनिर्णयमुद्रया हेतुत्वेन व्यभिचारवारणाय दण्डो रक्त इति निर्णयविशिष्टत्वं तज्जन्यतावच्छेदके निवेश्यम् । एवं चाप-त्तित्वनिवेशे प्रयोजनाभावः । एवं च रक्तदण्डवान् पुरुष इति वि-शिष्टवैशिष्ट्यबोधस्यापि तज्जन्यतावच्छेदकाक्रान्ततया तत्र तादृ-शानिर्णयहेतुत्वं क्लृप्तमेव । एवं वह्निव्याप्यधूमवत्पर्वतवानिति-विशिष्टवैशिष्ट्यबोधेऽपि वह्निव्याप्यधूमवानितिनिर्णयस्य हेतुत्वं क्लृप्तमेव । तथा हि–अन्यलिङ्गकानुमितौ व्यभिचारवारणा-यानुमितौ तादृशानिर्णयहेतुतायां तादृशानिर्णयविशिष्टत्वस्य नि-वेश्यतयाऽनुमितित्वनिवेशे प्रयोजनाभावादित्याहुरिति ।

अत्रोच्यते–दण्डो रक्तत्वाभावाभाववानितिनिर्णयसामग्री-काले दण्डो रक्त इति निर्णयसामग्र्या आवश्यकत्वेन लाघवा-द्दण्डो रक्त इति निर्णयत्वेनैव तादृशापत्तौ हेतुतेति न तादृशानिर्ण-यवैशिष्ट्यं जन्यतावच्छेदकम् । एवं स्वावच्छिन्नप्रकारतानि-रूपितव्यापकत्वप्रकारतानिरूपितासामानाधिकरण्यप्रकारतानि-रूपितस्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नाविशे-ष्यताकत्वसम्बन्धेन धर्मविशिष्टनिर्णयत्वेन सकललिंगकपराम-र्शाणामेकरूपेण हेतुत्वेऽन्यलिंगकानुमितौ व्यभिचाराभावेन परा-मर्शजन्यतावच्छेदकेऽपि न तत्तन्निर्णयवैशिष्ट्यं निवेश-नीयम् ।

वस्तुतस्तु आपाद्य व्यतिरेकनिर्णयस्य परामर्शस्य च हेतुता-यामननुगताप्रामाण्यज्ञानाभाववैशिष्ट्यस्य निवेशनीयतयाऽप्रा-माण्यज्ञानकालीनघटादिप्रत्यक्षे व्यभिचारवारणाय कार्यताव-च्छेदककोटिप्रविष्टनिर्णयेऽपि तादृशाभाववैशिष्ट्यस्य निवेशाप-त्त्या गौरवप्रसंगेण तादृशनिर्णयवैशिष्ट्यनिवेशेऽपि तादृशप्रत्यक्षे

व्यभिचारवारणायापत्तित्वस्यानुमितित्वस्य च तत्तत्कार्यतावच्छेदककोटौ निवेशस्यौचित्येन क्लृप्तहेतुतयाऽनिर्वाहेण विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन विशिष्टवैशिष्ट्यबोधे स्वतन्त्रहेतुताकल्पनमावश्यकम् । अधिकमस्मत्कृतभवानन्दीप्रकाशेऽनुसंधेयमिति संक्षेपः ।

निर्णय-लक्षणम्

निर्णयत्वं च संशयान्यज्ञानत्वम् । अयं स्थाणुर्न वेत्याद्याकारकसंशयानन्तरं स्थाणुं सन्देह्मीत्याद्यनुव्यवसायसिद्धं संशयत्वमिति निर्विवादम् ।

संशय-विचारः

अथात्र संशयत्वं न जातिः, चाक्षुषत्वादिना संकरात् । अथ मानसत्वव्याप्यमेव संशयत्वं सर्वत्र धर्मिज्ञानकोषादिस्मरणादिवशान्मानससंशयस्यैवाभ्युपगमात् । न च चाक्षुषसामग्र्याः बलवत्तया कथं तादृशसंशयस्वीकार इति वाच्यं, अनापत्त्या तदानीं चक्षुर्मनोयोगादिरूपचाक्षुषसामग्र्या अकल्पनात् । न चैवं पर्वतो वह्निमान्न वेति संशयानन्तरं पर्वतं पश्यामीत्यनुव्यवसायानुपपत्तिः । तव मते तादृशचाक्षुषानुव्यवसायस्य चाक्षुषरूपविषयाभावात् । विषयस्य कार्यसहभावेन हेतुत्वादिति वाच्यम्, तादृशसंशयपूर्वं जायमानस्य धर्मिचाक्षुषरूपविषयस्य तथाविधानुव्यवसायोत्पत्तौ बाधकाभावात् । विषयस्य पूर्ववृत्तित्वेनैव हेतुत्वात् ।

वस्तुतस्तादृशसंशयोत्तरं धर्म्यंशे चाक्षुषमभ्युपेत्य तादृशानुव्यवसायोपपत्तिः । तादृशसंशयोत्तरक्षण एव तथाविधानुव्यवसायस्य शपथैकगम्यत्वात् । न च तर्कत्वजात्या सङ्कर इति वाच्यं, तस्य जातित्वे मानाभावादिति चेत्—

न । तुल्ययुक्त्या तर्कत्वस्यापि जातित्वेन सांकर्यस्यानुद्धारात् । यदि च पर्वतो निर्वह्निः स्यात्तदा निर्धूमोऽपि

स्यात् । भूतलं घटवदितिज्ञाने भूतलाद्यंशे तर्कत्वं स्वीकार्यं न वा । आद्ये भूतलाद्यंशे तर्कानुव्यवसायापत्तिः । अन्त्ये जातेरांशिकत्वापत्तिः । तस्मान्न तर्कत्वं जातिरिति विभाव्यते । तदा भूतलं घटवन्न वा । पटवच्च भूतलमितिज्ञाने पटाद्यंशे संशयत्वस्वीकारे तदंशे संशयानुव्यवसायापत्तेः । अस्वीकारे तु जातेरांशिकत्वापत्तिभिया संशयत्वमपि न जातिरिति तुल्यम् ।

अथ संशयत्वजातौ बाधकाभावः । न च जातेरांशिकत्वमेव बाधकमिति वाच्यं निश्चयसंशयस्वरूपसमूहालम्बनात्मकज्ञानास्वीकारात् । किन्तु क्षणविलम्बेन निश्चयस्य संशयस्य चाभ्युपगमात् । न चैवमनयैव युक्त्या तर्कत्वादेरपि जातित्वेन तामादाय संकरप्रसंग इति वाच्यं, संशयात्मकतर्कस्याऽप्यस्वीकारात् ।

ननु युगपत् संशयनिश्चयात्मकसमूहालम्बनोत्पत्तौ बाधकाभावः । निश्चयसंशयसामग्र्योः एकदा समाजसंभवादिति चेत्–

न । सामान्यत एव संशयसामग्र्याः निश्चयं प्रति प्रतिबन्धकताकल्पनात् । न तु विषयं निवेश्य प्रतिबध्यप्रतिबकन्धभावः गौरवात् । लाघवेन क्षणविलम्बस्यादोषत्वात् । एवं तर्कसामग्र्या अपि संशयं प्रति प्रतिबन्धकत्वकल्पनात् । न जातिसंकरोऽपि ।

ननु तर्कसामग्र्याः संशयं प्रति प्रतिबन्धकत्वकल्पने गौरवमेव । संशयसामग्रीप्रतिबन्धकताया उभयमतासिद्धतया अस्माभिर्लाघवेन सामान्यत एव स्वीकारात् । न त्वेतादृशी तर्कसाम-

अथापि तस्या उभयमतसिद्धप्रतिबन्धकत्वाभावादिति चेत्—

न । अनुमितिकारणतायां संशयान्यत्वरूपनिश्चयत्वनिवेशेन तत्र च संशयत्वस्य प्रवेशात्तस्य च लाघवप्रतिसंधानेन जातित्वासिद्धावनन्तरं तर्कत्वजातिमादाय संकरप्रसक्तौ तर्कसामग्र्याः प्रतिबन्धकतायां फलोत्तरकालीनकल्पनीयायां गौरवस्यादोषत्वादिति चेत्—

न । तथापि प्रवृत्तिजनकतावच्छेदकतया सिद्धेष्टसाधनताज्ञानत्वजातिमादाय संशयत्वस्य सांकर्यप्रसंगात् । न च संशयानन्तरमेव प्रवृत्त्यनुपगमेन क्षणविलम्बेनैवेष्टसाधनताज्ञानं कल्प्यमिति वाच्यं, अप्रामाणिकानन्तक्षणविलम्बादिकल्पनायां शतशः स्थले ब्रह्मणोऽप्यशक्यांगीकारत्वादिति चेत्—

अत्राहुः—एकधर्मिकविरुद्धोभयप्रकारकज्ञानत्वं संशयत्वं पर्वतो वह्निमान् वह्न्यभाववद्भूतलमित्यस्य वारकम् । एकधर्मिकेति एकविशेष्यकेत्यर्थः । भूतलं घटवत्पटवच्चेत्यादिज्ञानस्य संशयत्ववारकम् । विरुद्धपदं भूतलं वह्न्यभाववदितिज्ञानस्य तथात्ववारकमुभयपदम् । न चैवं द्रव्यं वह्न्यभाववत्पर्वतो वह्निमानिति ज्ञानस्य संशयत्वापत्तिरिति वाच्यं, सामान्यतः संशयस्यैकस्य लक्ष्यस्याभावेना(१)नुगतलक्षणस्यैव वाच्यतया पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालित्वे सति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यभावत्वावच्छिन्नप्रकारताशालिज्ञानत्वं(२)पर्वतो वह्निमान्न वेत्याकारकज्ञाने संशयत्वमि-

---

(१) 'अननुगते'ति 'ख'पुस्तकपाठः ।
(२) 'क'पुस्तके 'ज्ञानमि'त्यधिकः पाठः ।

ति विशिष्यैव लक्षणं वाच्यमित्यदोषात् ।

केचित्तु वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यताविशिष्टा या वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यता तच्छालिज्ञानत्वमेव तत्र संशयत्वम् । इदं च पर्वतो वह्निमान्न वा भूतलं वह्निमान्न वेत्यादिनिखिलसंशयसाधारणम् । वैशिष्ट्यं च स्वावच्छेदकावच्छिन्नत्वस्वावच्छेदकतानवच्छेदकानवच्छिन्नावच्छेदकताकत्वोभयसम्बन्धेन ग्राह्यम् । एवं च पर्वतो वह्निमान् वह्न्यभाववद्भूतलमिति ज्ञानस्य न संशयत्वम् । तत्र वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताया वैशिष्ट्यघटकस्वावच्छेदकावच्छिन्नत्वाभावेन वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यताविशिष्टत्वाभावात् । एवं च मेयत्वेन पर्वतत्वावच्छिन्ने वह्निगोचराया वाच्यत्वेन पर्वतत्वावच्छिन्ने वह्न्यभावबुद्धेरपि न संशयत्वम् । तत्र द्वितीयसम्बन्धेन वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यताविशिष्टत्वाभावात् । स्वावच्छेदकतानवच्छेदकवाच्यत्वानवच्छिन्नावच्छेदकताक(१)त्वाभावात् । पूर्वमते ईदृशज्ञानस्य संशयत्वं दुर्वारम् । पर्वतत्वावच्छिन्नविशेष्यताया वह्नित्वावच्छिन्नप्रकारतानिरूपितत्वस्य वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितत्वस्य च सत्वात् । न च निरवच्छिन्नत्वमधिकं निवेश्यमितिवाच्यं, जातिमद्वह्निमन्न वेति संशयासङ्ग्रहापत्तेः । न च भिन्नमेवात्र संशयत्वं निर्वक्तव्यमिति वाच्यम्, अस्मदुक्तप्रकारेणानुगमसम्भवेन त्वद्रीत्याऽननुगमस्याप्रयोजकत्वादित्याहुः—

---

(१) 'वाच्यत्वानवच्छिन्नावच्छेदकत्वाभावा'दित्येव 'ख'पुस्तकपाठः ।

अत्रेदं प्रतिभाति—तथा हि न तावदनुगतं लक्ष्यमेककमस्ति। येन भूतलं वह्निमन्न वा पर्वतो वह्निमान्न वेति संशयसाधारणं लक्षणं सम्भाव्येत। किञ्च पर्वतो वह्न्यभाववानिति ज्ञानस्यापि संशयत्वापत्तिः। तज्ज्ञानीयवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वतनिष्ठविशेष्यताया अपि ज्ञानान्तरीयवह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यताविशिष्टत्वात्।

अपि च स्वावच्छेदकत्वे पर्याप्तेर्निवेशः क्रियते न वा। आद्ये नीलपर्वतत्वावच्छेदेन वह्निमत्तावगाहिपर्वतत्वावच्छेदेन वह्न्यभाववत्तावगाहिसंशयासङ्ग्रहप्रसङ्गः। नान्त्यः, नीलपर्वतत्वावच्छेदेन वह्निमत्तावगाहिपर्वतत्वसामानाधिकरण्येन वह्न्यभाववत्तावगाहिज्ञानस्य संशयत्वापत्तेः। यथोक्तलक्षणे तु विशिष्य पर्वतत्वादीनां निवेशेनोपपत्तेः।

अथ समुच्चयेऽपि वह्निवह्न्यभावोभयविषयकेऽतिव्याप्तिः। विरोधविशिष्टवह्नित्वावच्छिन्नप्रकारतेति निवेशनीयम्। समुच्चये तु विरोधस्याभावेन नातिप्रसङ्ग इति तु न सांप्रतम्। यादृशसंशये विरोधो न भातः तादृशेऽव्याप्तेः। न च तथाविधसंशयो न स्वीक्रियत इति वाच्यम्, धर्मिज्ञानकोट्योपस्थित्यादिनिखिलसामग्रीसत्त्वे तदुत्पत्तौ बाधकाभावात्। अत एव दीधितिकृताप्युक्तं क्वचिद्विरोधस्यापि तद्भासकसामग्रीसमाजाधीनत्वात्। अन्यथा क्वचिदित्युक्तेरसङ्गतेः। न च विरोधः संसर्गमर्यादया भासत एव। प्रकारतया भाने विरोधभानसामग्र्यपेक्षणात्। तथा च विरोधविशिष्टसंयोगसम्बन्धावच्छिन्नवह्निप्रकारतायाः सर्वत्रापि संशये भाने बाधकाभावात्। समुच्चये तु शुद्धसंयोगविशेषणतयोरेव भानान्नातिप्रसङ्गः। दीधि-

तिग्रन्थस्यापि प्रकारतया भानाभिप्रायकत्वान्न कोऽपि दोष इति वाच्यम्, संयोगो न विरोधीय इति बाधबुद्धिकालीनसंशयेऽव्याप्तेः । तदानीं विरोधविशिष्टसंयोगस्य संसर्गतया भानासम्भवादिति चेत्—

मैवम् । विरोधविशिष्टसंयोगविरोधविशिष्टविशेषणतान्यतरसम्बन्धेनावच्छिन्नप्रकारताशालित्वं स्वातन्त्र्येण विवक्षितम् । संशयस्यैवान्यतरसम्बन्धावच्छिन्नप्रकारताशालित्वात् ।

न चैवं संयोगो न विरोधीय इति बाधबुद्धिकालीनसंशयेऽव्याप्तेर्दुर्वारैवेति वाच्यम्, एतादृशबाधबुद्धिकालीनसंशये विरोधविशिष्टसंयोगस्य संसर्गत्वाभावेऽपि विरोधिविशिष्टविशेषणतायाः संसर्गत्वे बाधकाभावात् । एवं विशेषणताविशेषो न विरोधीय इति बाधबुद्धिकालीनसंशयस्य विरोधविशिष्टसंयोगसंसर्गकत्वात् । संयोगो न विरोधीयो विशेषणताविशेषो न विरोधीयः इति बाधबुद्धिदशायां संशयो न भवत्येव । अथ विरोधस्य संसर्गतया भानस्वीकारस्तदोपपद्यते यदि विरोधस्य संसर्गतया भानं प्रामाणिकं स्यात् । तदेव न प्रमाणाभावात् ।

न च संशयसमुच्चययोर्भेदान्यथानुपपत्त्या तद्भानमिति वाच्यम् । अव्याप्यवृत्तित्वग्रहोत्तरकालमेव समुच्चयोत्पत्त्या संशयस्याव्याप्यवृत्तित्वग्रहानुत्तरकालीनस्य भेदसम्भवादिति चेत्—

न । विषयतावैलक्षण्यकृतमेव ज्ञाने वैलक्षण्यमित्यस्य सर्वसिद्धान्तसिद्धत्वात् । संशयसमुच्चययोर्विषयताकृतवैलक्षण्यस्यैव वैलक्षण्यनियामकत्वम् । अतोऽनापत्त्या विरोधस्य संसर्गतया भानमभ्युपगन्तव्यम् ।

न च तथापि धर्म्यंशे कोट्यंशे वा विलक्षणविषयतैव। तयो- र्वैलक्षण्यनियामिकास्तु किं संसर्गांशे एव तथाविधभानमिति वाच्यम्, धर्म्यंशे कोट्यंशे वा वैलक्षण्यनियामकत्वेन कल्पनीया- याः विषयतायाः समुच्चयेऽपि सत्वात्। समुच्चयेऽपि धर्मिणः कोटिद्वयस्य च भानाभ्युपगमात्। अखण्डोपाधिस्वरूपस्य तस्य संशय एव धर्म्यंशे कोट्यंशे वा सत्वं न तु समुच्चयेऽपि। कल्पनीय- स्य तादृशस्य संशय एव कल्पनादिति तु नाशङ्कनीयम्। तस्य तथात्वेऽपसिद्धान्तात्। अन्यथा संशयत्वस्यैव तथात्वमस्तु। तथा च गतं विवादेनेति।

अथ तथापि विरोधस्य पदार्थान्तरस्य वा संसर्गतया भान- मभ्युपेयत इत्यत्र विनिगमकाभावात्। अनुपस्थितविरोधस्येवा- तिरिक्तपदार्थान्तरस्यापि संसर्गतया भानाभ्युपगमप्रसङ्ग इति चेत्—

न। अविरोधित्वज्ञानदशायां संशयस्यानुत्पादेऽनुभवानुरो- धादेव संशये विरोधभानस्यावश्यकत्वात्। एवं च न विनि- गमनाविरहशङ्कापि।

न चैवमपि परस्परविरोधित्वेन स्थाणुत्वपुरुषत्वोभयप्रका- रके भावद्वयकोटिके संशयेऽव्याप्तिः। तत्राभावाप्रकारकत्वादि- ति वाच्यम्, भावद्वयकोटिकसंशयानभ्युपगमात्।

न च परस्परविरुद्धत्वेन स्थाणुत्वपुरुषत्वोभयप्रकारकज्ञा- नसामग्रीभ्यां जननीयस्य ज्ञानस्यार्थादेव भावद्वयकोटिकसंशय- त्वमिति वाच्यम्, तादृशस्थलेऽयं स्थाणुर्न वाऽयं पुरुषो न वे- त्याकारकचतुष्कोटिकसंशयस्यैव स्वीकारात्।

वस्तुतस्तु तत्र स्थाणुत्वपुरुषत्वोभयप्रकारतां निवेश्य सं-

शयत्वं निर्वाच्यमिति न दोषः ।

न च सामानाधिकरण्येन विरोधिकोटिद्वयावगाहिज्ञानस्य संशयत्वापत्तिः, इष्टापत्तेः ।

न च वह्निमद्भेदवह्निकोटिकसंशयेऽव्याप्तिः । तत्रापि प्रकारान्तरेण वह्निमद्भेदादिकं निवेश्यैव लक्षणान्तरप्रणयनात् ।

वस्तुतस्तु वह्न्यभावप्रकारतेत्यत्र वह्निविशिष्टाभावप्रकारतेति वाच्यम् । वैशिष्ट्यं च स्वप्रतियोगिताकत्वस्वावच्छिन्नतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वान्यतरसम्बन्धेनेति न कोऽपि दोषः ।

वस्तुतः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितपर्वतत्वव्यापकत्वघटितसम्बन्धावच्छिन्नवह्निवह्न्यभावान्यतरप्रकारताशालिज्ञानत्वघटितं पर्वतत्वविशिष्टे वह्निसंशयत्वम् । समुच्चयस्य तु सामानाधिकरण्येनोभयकोट्यवगाहित्वान्न दोषः ।

न च संयोगादेरव्याप्यवृत्तित्वग्रहदशायां द्रव्यत्वावच्छेदेनैव संयोगतदभावयोर्ग्रहस्यापि संशयत्वापत्तिरिति वाच्यं, (१)अव्याप्यवृत्तित्वग्रहस्य सामानाधिकरण्येनोभयप्रकारकज्ञानं प्रति हेतुतया तयोरव्याप्यवृत्तित्वग्रहदशायां द्रव्यत्वावच्छेदेन तत्तदभावोभयप्रकारकज्ञानानुदयात् । न तथाविधग्रहस्य संशयत्वापादनम् । एवं च समुच्चयेऽव्याप्यवृत्तित्वग्रहोपयोगोऽपि संगच्छते । अन्यथा तदभावेपि समुच्चयस्य सामानाधिकरण्येन भावाभावविषयकत्वे बाधकाभावेन तत्र तदनुपयोगस्य दुरुद्धरत्वापत्तेः ।

---

( १ ) 'अव्याप्ये'ति 'ख'पुस्तकपाठः ।

अत एव सामानाधिकरण्येन परस्परविरोधित्वेन तत्तदुभयप्रकारके संशये उक्तलक्षणासंगमनादव्याप्तिरित्यपि कस्यचिदुक्तं परास्तम् । सामानाधिकरण्येन कोटिद्वयावगाहिज्ञानस्य संशयत्वाभावात् ।

नन्वेवमपि पर्वतत्वावच्छिन्नविशेष्यतेऽत्र पर्वतत्वेऽवच्छेदकतापर्याप्तिर्न निवेश्यते। निवेश्यते वा आद्ये नीलपर्वतत्वावच्छेदेन वह्न्यभावावगाहिपर्वतत्वसामानाधिकरण्येन वह्न्यवगाहिज्ञानस्य नीलपर्वतो वह्न्यभाववान् पर्वतो वह्निमानित्याकारकस्य संशयत्वापत्तिः । तस्यापि पर्वतत्वविशिष्टे वाह्निवह्न्यभावोभयप्रकारकत्वात् । अन्त्ये नीलपर्वतत्वसामानाधिकरण्येन वह्न्यभावावगाहिशुद्धपर्वतत्वावच्छेदेन वह्न्यवगाहिज्ञानस्य संशयत्वानापत्तिरिति चेत्—

मैवम् । शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितपर्वतत्वव्यापकविशेषणतासम्बन्धावच्छिन्नवह्न्यभावप्रकारताशालित्वे सति शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितशुद्धसंयोगसम्बन्धावच्छिन्नवह्निप्रकारताशालिज्ञानत्वं पर्वतत्वसामानाधिकरण्येन वह्निसंशयत्वम् । एवं पर्याप्तिमनिवेश्य सामान्यतः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेषणतासम्बन्धावच्छिन्नवह्न्यभावप्रकारताशालित्वे सति शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितपर्वतत्वव्यापकसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिज्ञानत्वं पर्वतत्वावच्छेदेन वह्निसंशयत्वम् । पर्वतत्वसामाधिकरण्येन प्रागुक्तवह्निनिश्चये तु शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारताशालित्वविरहेण पर्वतत्वसामानाधिकरण्येन संशयलक्षणस्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपितपर्वतत्वव्यापकसं-

योगसम्बन्धावच्छिन्नप्रकारताशालित्वस्य च विरहेण पर्वतत्वावच्छेदेन संशयलक्षणस्य नातिप्रसंगः ।

यत्तु स्वीयतत्प्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकघटकीभूतप्रकारताशालिज्ञानत्वं तत्संशयत्वं विभिन्नधर्मिकतत्तदभावोभयप्रकारके ज्ञाने नातिप्रसंगस्तत्र स्वीयतत्प्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकघटकीभूतप्रकारताशालित्वाभावात् । भावद्वयकोटिकसंशयस्यापि तत्प्रकारकबुद्धौ तद्विरोधित्वेन पदार्थान्तरप्रकारकबुद्धेर्विरोधित्वेन संग्रहः । एवं चोक्तप्रकारताशालिनो वह्निमद्ध्रदादिकोटिकस्यापि संशयस्य संग्रहः । सामानाधिकरण्येन परस्परविरोधिकोटिद्वयावगाहिनो ज्ञानस्याप्युक्तप्रकारताशालित्वाभावान्न संशयत्वम् । पर्वतत्वावच्छेदेन वह्न्यवगाहिपर्वतत्वसामानाधिकरण्येन वह्न्यभावावगाहिज्ञानस्योक्तप्रकारताशालिनो भवत्येव संशयत्वम् । समुच्चयेऽवच्छेदकावच्छेदेनान्यतरप्रकारताया अपि सत्वे तु तथाविधलक्षणसंगमनात् । संशयत्वापत्तिवारणाय विरोधविशिष्टसंयोगसम्बन्धावच्छिन्नत्वं प्रकारतायां निवेशनीयम् । अन्यथा न निवेशनीयमित्याहुः—

अत्रेदं चिन्त्यम् । उक्तरीत्या सर्वत्र विरोधविशिष्टसंयोगस्य संसर्गत्वासंभवः । विरोधविषयताशालित्वस्य स्वातन्त्र्येण निवेशेऽपि ज्ञानभेदेन विषयताभिन्नेतिमते निश्चयत्वेनैव प्रतिबन्धकत्वात् । संशयीयविषयतायाः प्रतिबन्धकतावच्छेदकघटकत्वाभावेन सर्वत्रासंभवापत्तिः ।

किञ्च पर्वतो वह्निमान् वह्न्यभावव्याप्यवांश्चेतिज्ञानेऽतिप्रसंगः । तस्यापि तादृशप्रतिबन्धकतावच्छेदकघटकीभूतप्र-

कारताशालित्वात् । न च तादृशज्ञाने आहार्य्येऽनाहार्ये वा तिप्रसंग आपाद्यते । नाद्यः समुच्चयवारणाय दत्ताया विरोधविषयताया अभावेनैवानतिप्रसंगात् । नापि द्वितीयः तादृशज्ञानस्यालीकत्वादिति वाच्यं, तदभावव्याप्यवत्ताज्ञानसामग्र्याः प्रतिबन्धकत्वानङ्गीकारेण तादृशसमूहालम्बनज्ञानोत्पत्तौ बाधकाभावात् । अत एव दीधितिकृताऽप्युक्तं "यदि चायं वह्निमान्वह्न्यभावव्याप्यवानि"त्यादि । एवमाहार्य्यसंशयानुरोधेनापि आहार्यज्ञाने विरोधाविषयतास्वीकार आवश्यक एवेति । तथाविधाहार्यज्ञाने भवत्येवातिप्रसंगः । यदि च तादृशप्रतिबन्धकतावच्छेदकघटकीभूतप्रकारतायां ग्राह्याभावनिष्ठत्वं निवेश्यते तदापि भावद्वयकोटिकसंशयासंग्रह इति किमुपन्यस्तं तत्संग्रह इति ।

अन्ये तु वह्निवह्न्यभावोभयप्रकारतानिरूपितैकविशेष्यता(१)शालिज्ञानत्वं संशयत्वम् । संशयसमुच्चययोर्वैलक्षण्याय संशये उभयप्रकारतानिरूपितैकविशेष्यतायाः समुच्चये तूभयप्रकारतानिरूपिताविशेष्यताद्वयस्य च स्वीकारात् । महानसं वह्न्यभाववत् पर्वतो वह्निमानिति ज्ञानस्यापि न संशयत्वम् । न च संशय एवोभयप्रकारतानिरूपितविशेष्यताद्वयम् । समुच्चये तूभयप्रकारतानिरूपितैकविशेष्यत्वमित्येव किं न स्यादिति वाच्यम् । संशये विशेष्यताद्वयस्वीकारे अनुमितिकारणतायां वह्निव्याप्यधूमाभावप्रकारतानिरूपितपर्वतविशेष्यताकान्यत्वे सति वह्निव्याप्यधूमप्रकारतानिरूपितविशेष्यताशालित्वस्य समुच्चयसंग्रहायाभावप्रकारतायां विरोधाद्यवच्छिन्नत्वस्य च निवेशे गौरवात् ।

---

(१) 'विषयते'ति 'ख'पुस्तकपाठः ।

संशये एकविशेष्यताया अभ्युपगमे तु वह्निव्याप्यधूमप्रकारता-निरूपितविशेष्यतायां वह्निव्याप्यधूमाभावप्रकारत्वानिरूपितत्व-स्यैव निवेशेन लाघवात् ।

ननु संशये उभयप्रकारतानिरूपितैकविशेष्यतायाः सत्वेऽपि प्रत्येकविशेष्यताद्वयवारणं दुःशक्यम् । एवं च पूर्वोक्तानुमिति-कारणतावच्छेदकगौरवं भवन्मतेऽपि दुर्वारम् ।

न च तादृशविशेष्यताद्वयं प्रति संशयसामग्र्याः प्रतिबन्ध-कत्वान्न तादृशविशेष्यताद्वयमिति वाच्यं, तादृशप्रतिबध्यप्रतिब-न्धकभावकल्पनापेक्षया विशेष्यताद्वयकल्पने गौरवाभावादि-ति चेत्—

न । अनेकज्ञाने विशेष्यताद्वयकल्पनापेक्षया प्रतिबध्यप्रति-बन्धकभावकल्पने लाघवात् । अथास्तु संशये उभयप्रकारता-निरूपितैकविशेष्यता तथापि वह्निमान् पर्वतो वह्न्यभाववानि-तिसमुच्चयेऽतिप्रसंगः । धर्मितावच्छेदकस्यापि प्रकारतया उभ-यप्रकारतानिरूपितैकविशेष्यताया अपि सत्वादिति चेत्—

मैवम् । प्रकारतायां धर्मितावच्छेदकत्वाख्यविषयताभेदस्य निवेशात् । अत एव संयोगवद्द्रव्यं तदभाववच्चेतिज्ञानेऽतिप्रसं-गः । तत्रोभयप्रकारतानिरूपितैकविशेष्यताया अपि सत्वात् । अन्यथा द्रव्यं संयोगवत्तदभाववच्च द्रव्यमितिज्ञानाद्भेदानुपपत्तेः । तस्मात्तादृशज्ञानेऽनुभयप्रकारतानिरूपितैकविशेष्यतासत्वादतिप्र-संग इत्यपास्तम् ।

अथ नीलपर्वतो वह्निमान् पर्वतो वह्न्यभाववानितिज्ञानस्य नीलपर्वतत्वावच्छेदेन वह्निप्रकारकस्य शुद्धपर्वतत्वावच्छेदेन व-ह्न्यभावप्रकारकस्य संशयत्वानापत्तिः । वह्नित्वावच्छिन्नप्रकारता-

निरूपितविशेष्यतायाः शुद्धपर्वतत्वेन वह्न्यभावप्रकारतानिरूपितविशेष्यतायाश्च नीलपर्वतत्वेनावच्छिन्नत्वाभावात् । विशेष्यतावच्छेदकभेदेन विशेष्यताभेदावश्यकतया प्रकृते उभयप्रकारतानिरूपितैकविशेष्यत्वाभावात् । तत्रोभयप्रकारतानिरूपितविशेष्यतायां नीलपर्वतत्वावच्छिन्नत्वस्य शुद्धपर्वतत्वावच्छिन्नत्वस्य वाऽभ्युपगमे शुद्धपर्वतत्वावच्छिन्नविशेष्यकोभयप्रकारकस्य नीलपर्वतत्वावच्छेदेन तथाविधसंशयस्य चोक्ततथाविधसंशयाद्भेदानापत्तेः । तथाविधसंशयानन्तरं पर्वते वह्निं संदेह्मि नीलपर्वते वह्न्यभावं संदेह्मीत्यनुव्यवसायापत्तेश्चेति चेत्—

न । नीलपर्वतो वह्निमान् वह्न्यभाववान् पर्वत इत्याकारकसंशये उभयप्रकारतानिरूपितविशेष्यतायां नीलपर्वतत्वावच्छिन्नत्वस्य पर्वतत्वावच्छिन्नत्वस्य वाऽभ्युपगमात् । नीलपर्वतो वह्निमान्न वेति संशये तु नीलत्वावच्छिन्नत्वस्यैवाभ्युपगमात् । पर्वते वह्निं संदेह्मि नीलपर्वते वह्न्यभावं संदेह्मीत्यनुव्यवसायं प्रति तु पर्वतो वह्निमान्न वा नीलपर्वतो वह्निमान्न वेत्याकारकसंशयस्यैव हेतुत्वान्न कोऽपि दोष इत्याहुः—

अपरे तु संशये उभयप्रकारतानिरूपितविशेष्यतयोः परस्परमवच्छेद्यावच्छेदकभावः स्वीक्रियते संशयसमुच्चययोर्वैलक्षण्याय तथैवाभ्युपगमात् । तथा च तत्प्रकारतानिरूपितविशेष्यतावच्छिन्नतदभावप्रकारतानिरूपितविशेष्यताशालिज्ञानत्वं संशयत्वम् । समुच्चये तु नावच्छेद्यावच्छेदकभावः स्वीक्रियते इति न तत्रातिप्रसंगः । न च समुच्चय एवास्तु । अवच्छेद्यावच्छेदकभाव इत्यतोऽपि वैलक्षण्यमुपपत्स्यत एवेति वाच्यम् । तथा सत्यनुमितिकारणतायां तदभावप्रकारतानिरूपितविशेष्यतानवच्छि-

न्नतत्प्रकारतानिरूपितविशेष्यताशालित्वरूपसंशयत्वनिवेशेन गौरवात् । यदि च वह्निर्वह्न्यभावो वा पर्वत इति पर्वतविशेषणकोऽपि संशयः स्वीक्रियते तदास्तु तत्तदभावोभयविशेष्यतानिरूपितपर्वतानिष्ठप्रकारतयोरप्यवच्छेद्यावच्छेदकभावः ।

एवं पर्वतो वह्निमान् वह्न्यभावो वा पर्वत इत्याकारकसंशयस्यापि स्वीकारे तत्प्रकारतानिरूपितविशेष्यतातदभावविशेष्यतानिरूपितप्रकारतयोरप्यवच्छेद्यावच्छेदकभावः स्वीकार्य इत्याहुः—

वस्तुतस्तु भावद्वयकोटिकसंशयानभ्युपगमे अभ्युपगमे वा तस्यैव पर्वतो वह्निमान् वह्न्यभावव्याप्यवांश्चेतिज्ञानस्यापि संशयत्वाभ्युपगमे ज्ञानभेदेन विषयताभेदाभावे च पूर्वोक्तं स्वीयतत्प्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकघटकीभूतप्रकारताशालिज्ञानत्वं तत्संशयत्वमित्येव सम्यक् । न च स्वत्वस्याननुगमादिदमपि न सम्यगिति वाच्यं, स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकघटकीभूतप्रकारताशालित्वस्वनिरूपकत्वोभयसम्बन्धेन तत्प्रकारतावज्ज्ञानत्वं तत्संशयत्वमितिनिष्कर्षेणानुपपत्त्यभावात् ।

**स्वतन्त्रास्तु** संशयत्वं जातिरेव सांकर्यस्य दोषत्वानङ्गीकारात् ।

स्वतन्त्रास्तु संशयत्वं जातिरेव

न चैवं निर्णयत्वं संशयान्यज्ञानत्वरूपं न स्यात् । तस्यापि जातित्वे बाधकाभावादिति वाच्यम् । इष्टापत्तेरित्याहुः—

तदसत् । अनुमानपरिच्छेदे सांकर्यस्य दोषताया व्यवस्थापनीयत्वादित्यलमधिकेन ।

ननु किमिदं प्रकारत्वादि यत् संशयत्वादिघटकमिति चेत्--

प्रकारतादिकं विषयताविशेष एवेति गृहाण। विषयता च ज्ञानविषययोः स्वरूपसम्बन्धविशेष एव। तत्त्वं च सम्बन्धान्तरमन्तरेणैव विशिष्टप्रत्ययजननयोग्यत्वम्। जननयोग्यत्वं च न जननोपहितत्वम्। अतीन्द्रियाभावसम्बन्धाव्याप्तेः। तेन प्रत्यक्षादिविशिष्टप्रत्ययाजननात्। किन्तु विशिष्टप्रत्ययजननयोग्यतावच्छेदकावच्छिन्नत्वम्। तच्चात्यन्ताभावे प्रतियोगिदेशान्यदेशत्वम्। अन्योन्याभावे प्रतियोगितादेशान्यदेशत्वम्। प्रागभावध्वंसयोः प्रतियोगिकालान्यकालत्वम्। एवमन्यत्राप्यूह्यम्।

अथोक्तरूपस्य कदा चिदपि विशिष्टप्रत्ययरूपफलसम्बन्धरहितातीन्द्रियाभावसाधारणतया कथं स्वरूपयोग्यतावच्छेदकरूपत्वम्। तथा सति नित्यस्य स्वरूपयोग्यत्वे फलोपधानावश्यंभावनियमभंगप्रसंगादिति चेत्—

न। तादृशनियमे मानाभावात्।

वस्तुतस्तु स्वरूपसम्बन्धस्तत्तद्व्यक्तिरूपोऽननुगत एवेति न कोऽपि दोष इति प्राञ्चः।

नवीनमते विषयता स्वरूपसम्बन्धविशेषादतिरिक्तैव

नवीनास्तु-विषयतातिरिक्तैव। न तु स्वरूपसम्बन्धविशेषः। तथा हि सा च ज्ञानस्वरूपा विषयस्वरूपा उभयस्वरूपा वा। नाद्यः, घटपटाविति समूहालंबनानां भ्रमत्वापत्तेः। घटत्वावच्छिन्नघटविषयत्वस्य पटत्वावच्छिन्नपटविषयत्वस्य चैकज्ञानरूपतया तत्र घटत्वावच्छिन्नपटविषयतायाः पटत्वावच्छिन्नपटविषयतायाश्च सत्वात्। एवं तादृशसमूहालम्बनानन्तरं पटत्वे-

न घटं जानामि घटत्वेन पटं जानामीत्यनुव्यवसायापत्तिश्च। पटत्वावच्छिन्नघटनिष्ठविषयताकज्ञानस्य घटत्वावच्छिन्नपटनिष्ठविषयताकज्ञानस्य च तदनुव्यवसायविषयत्वात्। न द्वितीयः, घटत्वप्रकारकप्रमाया अपि भ्रमत्वापत्तेः। घटत्वप्रकारकप्रमायां पटत्वप्रकारकभ्रमे च घटस्वरूपघटानिष्ठविषयताया ऐक्यात्। न तृतीयः, जातिमान् घट इत्यादौ घटत्वाद्यात्मकैकैकविषयवृत्तेरेकैकज्ञानीयविषयताया जातित्वाद्यवच्छिन्नत्वतदनवच्छिन्नत्वाभ्यां द्वैविध्यानुपपत्तेः। ज्ञानस्य विषयस्य च द्वैविध्यविरहात्। न चेष्टापत्तिः। तथा सति तादृशज्ञानस्य जातिमान् घट इति प्रत्येकद्वयाद्वैलक्षण्यानुपपत्तेः। तस्माद्विषयतातिरिक्तैव।

एवं विषयतावद्विषयिताप्यतिरिक्तैव।

न चातिरिक्तविषयताप्रतियोगित्वमेव विषयित्वमास्तां कृत-
विषयिता- मतिरिक्ततयेति वाच्यं, विषयित्वमेवातिरिक्तं तत्प्र-
प्यतिरिक्तैव तियोगित्वमेव विषयत्वमित्यस्यापि वक्तुं शक्यतया
विनिगमकाभावेन द्वयोरप्यतिरिक्तत्वात्।

अथैवं तुल्ययुक्त्या विषये विषयतासम्बन्धो ज्ञाने विषयिता सम्बन्धश्चातिरिक्तः कल्पनीयः। एवं तादृशसम्बन्धस्यापि सम्बन्धोऽप्यतिरिक्त इत्यनवस्था स्यादिति चेत्—

न। तादृशानवस्थायाः प्रामाणिकत्वेन दूषणावहत्वाभावात्। सा चातिरिक्तविषयता विषयभेदाद्भिन्ना। अन्यथोक्तदूषणानामनुद्धारात्। न तु ज्ञानभेदेन भिन्ना मानाभावादित्यादिकमन्यदूह्यमिति प्राहुः।

सा च विषयता निर्विकल्पकीया, प्रकारता, विशेष्यता, संसर्गता

विषयता-चेति चतुर्विधा । न च तासां विषयतात्वे मानाभाव इति भेदाः वाच्यं, तदुपनीतभानं प्रति तत्प्रकारकज्ञानं च प्रति तद्विषयकज्ञानस्य हेतुतया निर्विकल्पकोत्तरं तत्प्रकारकतद्विशेष्यकतत्संसर्गकज्ञानोत्तरं च तदुपनीतभानतत्प्रकारकज्ञानोत्पत्तेरेव मानत्वात् । न च तन्निर्विकल्पकोत्तरं तदुपनीतभानस्य तत्संसर्गकज्ञानोत्तरं तदुपनीतभानतत्प्रकारकज्ञानयोश्चोत्पत्तिरसिद्धेति वाच्यं, तत्प्रकारकादिज्ञानोत्तरमपि तदसिद्धेर्वक्तुमशक्यत्वात् । न ह्येतदुत्तरमेव तदुत्पत्तिर्नोक्तज्ञानोत्तरमित्यनुभवे मानमस्ति तस्यैवासिद्धेः । युज्यते चैतत् । अन्यथा दशरथादिपदात् शाब्दबोधानुपपत्तेः । तत्र हि स्वरूपतो दशरथत्वादिप्रकारकशाब्दबोधस्यैवोदयेन तत्र स्वरूपतो दशरथत्वादिप्रकारकशक्तिज्ञानपदार्थस्मृत्यादिकारणस्यापेक्षणेन पूर्वं तदभावात् । अस्मन्मते तु स्वरूपतो दशरथत्वादिसंसर्गज्ञानमूलकात्स्वरूपतस्तत्प्रकारकशक्त्यादिज्ञानात्तथाविधशाब्दबोधोपपत्तेः । एतेन संसर्गतायां विषयतात्वे मानाभाव इत्युच्छृङ्खलोक्तिरपास्ता ।

उक्तरीत्या प्रकारतादिवत्संसर्गतायामपि तत्सिद्धेर्दुर्वारत्वात् । यदि च विषयेष्वतिरिक्तविषयतानां तत्र च विषयतात्वकल्पनापेक्षया विषयवृत्तित्वेन क्लृप्तानां प्रकारतानां विशेष्यतानां विषयतात्वकल्पनस्यौचित्यमिति प्रकारतादौ विषयतात्वसिद्धिस्तदा संसर्गतायामप्येतादृशरीत्या विषयतात्वसिद्धिर्दुर्वारैव । संसर्गताया अपि विषयवृत्तित्वेन क्लृप्ततया विनिगमकाभावात् । न च घटत्वेनेमं जानामीतिप्रतीत्या प्रकारविशेष्ययोर्विषयत्वेन प्रकारताविशेष्यतयोर्विषयवृत्तित्वेऽपि संसर्गस्याविषयतया न संसर्गताया विषयवृत्तित्वमिति वाच्यं, समवायसंसर्गेण घटत्वं जानामीतिप्रतीत्या

समवायसंसर्गस्यापि विषयत्वात् । तस्य तटस्थतया नियामकत्वोपगमेनाविषयत्वे प्रकारादावपि तथात्वस्य वक्तुं शक्यत्वादिति न किञ्चिदेतत् ।

वस्तुतस्तु कंबुग्रीवादिमत्वादेर्गौरवज्ञानदशायां तदवच्छिन्नप्रतियोगित्वप्रकारकं तद्विशेष्यकं तत्संसर्गकं च ज्ञानं न जायत इत्यनुभवसिद्धम् । एवं च प्रकारतादेर्विषयतात्वानुपगमे कंबुग्रीवादिमत्वादिकं गुर्विंतिगौरवज्ञानस्य तादृशप्रतियोगित्वप्रकारकत्वादिकं त्रयं प्रतिबध्यतावच्छेदकं वाच्यमिति गौरवम् । प्रकारतादेर्विषयतात्वोपगमे तु कम्बुग्रीवादिमत्वविषयतानिरूपितावच्छिन्नत्वविषयतानिरूपितप्रतियोगित्वविषयताकबुद्धित्वं त्रितयसाधारणमेकमेव । प्रतिबध्यतावच्छेदकमिति लाघवमिति लाघवात्प्रकारतादिषु विषयतात्वासिद्धिः । एतेन निर्विकल्पकीयविषयताया विशिष्टज्ञानविषयसम्बन्धतयैव विशिष्टबुद्धेस्सविषयकत्वनिर्वाहे प्रकारतादीनां विषयतात्वे मानाभावः । तेषां विषयतानात्मकत्वेऽपि तद्वैलक्षण्यस्य ज्ञानवैलक्षण्यसंपादकत्वे विरोधाभावात् । अथ प्रकारताविशेष्यतयोर्विषयतात्वानुपगमे व्याप्यपक्षविशेष्यकपरामर्शयोर्व्याप्यविषयतानिरूपितपक्षविषयताशालित्वेनानुगमस्यनुमितिहेतुत्वासंभवः । तयोः पृथक् हेतुत्वे च कारणताद्वयापत्तेः । निर्विकल्पकीयविषयतायाः परस्परं निरूप्यनिरूपकभावाभावेन तां निवेश्योक्तरीत्याऽनुगमासंभवादिति चेत्—

न । निश्चयत्वनिवेशानुरोधेनाप्रामाण्यज्ञानस्योत्तेजकत्वानुरोधेन च तयोः पृथक्कारणतायाः आवश्यकत्वात् । अनुमितेः पक्षविशेष्यकत्वनियमेन समानविशेष्यकत्वानुरोधेन पक्षविशेष्यकपरामर्शस्यैवानुमितिहेतुत्वाच्च ।

अथ निर्विकल्पकीयविषयताया विशिष्टज्ञाने स्वीकारे घटत्वादिनिर्विकल्पकादिवज्जातित्वादिना घटत्वादिज्ञानादपि स्वरूपतो घटत्वादिप्रकारकस्य घट इत्याकारकस्य विशिष्टज्ञानस्यापत्तिः ।

न च स्वरूपतस्तद्विशिष्टबुद्धौ तदविशेष्यकतज्ज्ञानत्वेन हेतुत्वान्न दोष इति वाच्यं, तथा सति जातिर्घटश्चेत्यादिज्ञानाद्धट इत्यादिविशिष्टबुद्ध्यनापत्तेरिति चेत्—

न । तज्ज्ञानीयनिरवच्छिन्नप्रकारत्वासमानाधिकरणकिंचित्प्रकारतानिरूपिततद्विशेष्यताकत्वाभाववत्तज्ज्ञानत्वेन हेतुत्वोक्त्यावदोषादित्यपि परास्तम् । निर्विकल्पकीयविषयताया निरूप्यनिरूपकभावानापन्नतया गौरवज्ञानस्य तामादायोपदर्शितरीत्यैकप्रतिबध्यतावच्छेदकासम्भवेनोक्तलाघवानुरोधेन प्रकारतादेर्विषयतात्वसिद्धेर्ब्रह्मणोपि दुर्वारत्वात् ।

केचित्त्वनुभवसंस्कारस्मरणानां विषयतावृत्तिनिरूपकतासंसर्गेणैक एव कार्यकारणभावः कल्प्यते न तु विषयभेदेन पुरुषभेदेन वा, आनन्त्यापत्तेः । इत्थं च प्रकारताविशेष्यतासंसर्गतासु विषयतात्वमावश्यकम् । अन्यथा तत्र तत्र संस्काराद्युत्पत्तेरनियम्यतापत्तेः । अत एव निर्विकल्पकीयविषयतया न तन्निर्वाह इत्याहुः—

अत्र वदन्ति—विरोधिसामग्रीकालीनविशिष्टज्ञानेच्छाधीनविशिष्टज्ञानेषु निर्विकल्पकीयविषयता न सम्भवति । तच्छालिज्ञाने निर्विकल्पकेच्छाविरहविशिष्टविरोधिसामग्र्याः प्रतिबन्धकत्वात् ।

न च निर्विकल्पकं विना विशिष्टज्ञानमेव कथमिति वाच्यं, प्रकारान्तरेण विशेषणज्ञानसत्त्वेन तदुत्पत्तौ बाधकाभावात् ।

न च निर्विकल्पकस्थलीयविरोधिसामग्रीप्रतिबन्धकतायां विशिष्टज्ञानेच्छाया अप्युत्तेजकत्वोपगमान्न दोष इति वाच्यम् ।

तदिच्छाभावयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्धकतावृद्धौ गौरवापत्तेः । विशिष्टज्ञानेच्छाकाले तत्सामग्रयसत्वे विरोधिसामग्रीदशायां निर्विकल्पकापत्तेश्च । किं चानन्तविशिष्टज्ञानेषु निर्विकल्पकीयविषयतासम्बन्धकल्पनमपेक्ष्य प्रकारतादिषु विषयतात्वसम्बन्धकल्पनैव युक्ता ।

न चाभावकल्पनापेक्षया भावकल्पनाया लघुत्वादुक्तविशिष्टज्ञानेषु विषयत्वाभावसम्बन्धकल्पनापेक्षया विषयत्वसम्बन्धकल्पने लाघवात्स एव कल्पयते । न तु विषयत्वाभावसम्बन्ध इति वाच्यम् , तथा सति प्रकारतादिषु (१)विषयतात्वाभावसम्बन्धकल्पनमपेक्ष्य विषयतात्वसम्बन्धकल्पने लाघवेन तत्कल्पनस्यैवौचित्यमिति प्रकारतादिष्वपि(२) विषयतात्वसिद्धिर्निराबाधैवेति। अधिकमस्मत्कृतभवानन्दीप्रकाशेऽनुसन्धेयमिति दिक् ।

सा च विषयता निरूप्यनिरूपकभावानापन्ना तदापन्ना विषयता द्विधा चेति पुनरपि द्विधा । आद्या निर्विकल्पकीयविषयता । तस्यास्तथात्वे मानाभावात् । अन्त्या च विशिष्टज्ञानविषयताप्रकारताविशेष्यतासंसर्गतारूपाणां तासां परस्परं निरूप्यनिरूपकभावसत्वात् ।

न च तत्र मानाभाव इति वाच्यम् , तथा सति घटवद्भूतलं पर्वतो वह्निमानितिज्ञानविषयताया घटवान् पर्वतो वह्निमद्भूतलमिति ज्ञानविषयतायाश्चावैलक्षण्येन तादृशज्ञानयोर्वैलक्षण्यानुपपत्तेः । तदुपगमे तु आद्ये घटप्रकारत्वभूतलविशेष्यत्वयोर्वह्निप्रकारत्वपर्वतविशेष्यत्वयोश्च परस्परं निरूप्यनिरूपकभावः । अन्त्ये च वह्निप्रकारत्वभूतलविशेष्यत्वयोर्घटप्रकारत्वपर्वतविशेष्यत्वयोश्च परस्परं निरूप्यनिरूपकभाव इति तज्ज्ञा-

(१-२)-दिनिष्ठविषयतेति 'ख'पुस्तकपाठः ।

नयोर्वैलक्षण्योपपत्तिः ।

न च तथापि तयोः परस्परं निरूप्यनिरूपकभावे मानाभावः । अन्यतरस्मिन्नन्यतरस्य तदुपगमेनैव वैलक्षण्यनिर्वाहादिति वाच्यम् , विनिगमनाविरहादेव परस्परं निरूप्यनिरूपकभावसिद्धेः ।

न च तथापि संसर्गतया समं प्रकारताया विशेष्यतायाश्च निरूप्यनिरूपकभावे मानाभाव इति वाच्यम् , तत्र तेन संसर्गेण तत्प्रकारकमित्येतदर्थनिर्वचनान्यथानुपपत्त्यैव तत्सिद्धेः ।

न च तत्संसर्गकत्वे सति तन्निष्ठविशेष्यतानिरूपिततत्प्रकारताकत्वं तत्प्रकारतानिरूपिततद्विशेष्यताकत्वमेव वा तेन संसर्गेण तत्र तत्प्रकारकत्वमिति वाच्यम् । तथा सति भूतलादौ संयोगेन घटादिकं समवायेन रूपादिकमवगाहमानस्य ज्ञानस्य भूतलाद्यंशे संयोगेन रूपादिप्रकारकत्वस्य समवायेन घटादिप्रकारकत्वस्य चापत्तेः । एवं समवायेन कपालादौ संयोगेन च भूतलादौ घटादिकमवगाहमानस्य ज्ञानस्य समवायेन भूतलाद्यंशे संयोगेन च कपालाद्यंशे घटादिप्रकारकत्वस्यापत्तेः । तत्संसर्गकत्वे सति तन्निष्ठविशेष्यतानिरूपिततत्प्रकारताकत्वस्य तत्प्रकारतानिरूपिततद्विशेष्यताकत्वस्य वाविशेषात् । तदुपगमे च तन्निष्ठविशेष्यतानिरूपिततदीयसंसर्गतानिरूपिततदीयप्रकारताप्रतियोगित्वं तत्प्रकारतानिरूपिततदीयसंसर्गतानिरूपिततदीयविशेष्यताप्रतियोगित्वं वा तदंशे तेन संसर्गेण तत्प्रकारकत्वं यस्य यत्र संसर्गो भासते तदीयविशेष्यताप्रकारताभ्यामेव तदीयसंसर्गताया निरूप्यनिरूपकभावान्नोक्तापत्तिः ।

न च प्रकारताया एव संसर्गविशेषावच्छिन्नतया तत्संसर्गावच्छिन्नतदीयप्रकारतानिरूपिततदीयविशेष्यताकत्वं

तदीयविशेष्यतानिरूपितसंसर्गावच्छिन्नतदीयप्रकारताकत्वमेव वा तेन संसर्गेण तदंशे तत्प्रकारकत्वमस्तु किमुक्तनिरूप्यनिरूपकभावस्वीकारेणेति वाच्यम् । संसर्गतायाः संसर्गनिष्ठावच्छेदकतानिरूपकत्वरूपतया प्रकारतायां तत्स्वीकारेणैव संसर्गताप्रकारतयोर्निरूप्यनिरूपकभावसिद्धेः । अत एव प्रकारतयैव समं संसर्गताया निरूप्यनिरूपकभावोऽस्तु किं विशेष्यतया । तावताप्युक्तापत्तिवारणसम्भवादित्यपि निरस्तम् । उक्तसंसर्गावच्छिन्नत्वस्य विशेष्यतायामपि सम्भवेन विनिगमनाविरहेणैव तयापि समं संसर्गतायास्तत्सिद्धेः ।

नन्वेवं विशेष्यताप्रकारतयोः परस्परं साक्षान्निरूप्यनिरूपकभावे मानाभावः । प्रकारतायां विशेष्यतानिरूपितसंसर्गतानिरूपितत्वमेव विशेष्यतानिरूपितत्वम् । विशेष्यतायां प्रकारतानिरूपितसंसर्गतानिरूपितत्वमेव प्रकारतानिरूपितत्वम् । एतावतैव वैलक्षण्यादिनिर्वाहात् । विशिष्टज्ञानमात्रे प्रकारविशेष्ययोरिव संसर्गस्याप्यवश्यं भानादिति चेत्-

नेष्यत एव । विशेष्यताप्रकारतयोः साक्षान्निरूप्यनिरूपकभावः तदनभ्युपगमेऽप्युक्तरीत्या परंपरया निरूप्यनिरूपकभावेनैव निर्वाहसम्भवात् ।

केचित्तु घटत्वेनेमं जानामि वह्निमन्तं पर्वतं जानामीत्यनुगताकारानुव्यवसायादेव तत्सिद्धिः । प्रकारताविशेष्यतयोरिव तयोर्निरूप्यनिरूपकभावस्यापि मनसैव साक्षात्कारसम्भवात् । संसर्गताया अयोग्यतया तद्द्वारकस्य परम्परया निरूप्यनिरूपकभावस्य साक्षात्कारविषयत्वासम्भवादित्याहुः ।

अन्ये तु प्रतियोगितया साक्षात्परम्परासाधारणाधिकरणत्वावगाहिनो घटानधिकरणं भूतलमित्यादिनिश्चयस्य प्रतिब-

ष्यतावच्छेदकं घटप्रकारतानिरूपितभूतलविशेष्यताकत्वादिकमेव लाघवात्संसर्गताप्रवेशे संसर्गपरम्पराद्युद्ध्या प्रतिबध्यतातिद्धिप्रसङ्गादिति प्रकारताविशेष्यतयोः परस्परं साक्षान्निरूप्यनिरूपकभावसिद्धिः।

न चैवमपि वृत्त्यनियामकसंसर्गावच्छिन्नयोः प्रकारताविशेष्यतयोस्तदसिद्धिः। तत्रोक्तप्रकारासम्भवादिति वाच्यम्, तत्रापि सत्सम्बन्धित्वाभावानिश्चयप्रतिबध्यतावच्छेदकतयैव तत्सिद्धेः।

न च साक्षात्परम्परासाधारणसम्बन्धित्वस्यैकस्याभावान्नोक्तरीत्यापि तत्सिद्धिरिति वाच्यम्, साक्षात्परंपरासाधारणाधिकरणत्वस्यैव तस्याप्यनुगतव्यवहारादिनासिद्धेर्ब्रह्मणोपि दुर्वारत्वादित्याहुः।

सा चेयं विषयता ज्ञानेन सहोत्पद्यते विनश्यति च। अत एव विषयताया ज्ञानसमानदेशत्वसमानकालीनत्वप्रवादोपीति केचित्।

विषयता ज्ञानेन सहोत्पद्यते विनश्यति च

वस्तुतस्तु तथा सत्यनन्तव्यक्तिकल्पनापत्त्या ज्ञानभेदेन विषयताभेदोपगमेऽप्युक्तरीत्या विषयभेदाद्भेदावश्यकत्वे ज्ञानभेदाद्भेदे मानाभावेन चेदमयुक्तम्। किन्तु समवायवन्नित्यैव। अत एव नित्यसम्बन्धत्वेन समवायान्तर्भावान्न मुनिकृतपदार्थविभागविरोधोऽपीति सारः।

अत्र केचित्—उद्देश्यताविधेयता चातिरिक्ता विषयतानुमित्यादावुपेया। न च विशेष्यताप्रकारतारूपत्वमेव तयोरिति वाच्यम्, तथा सति जलादिव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्याद्याकारकपरामर्शजन्यायाः पृथिव्यामितरभेद इत्याद्याकारकाप्रसिद्धसाध्यविशेष्यकानुमितेः पृथिव्याद्युद्देश्यकत्वेतरभेदविधेयकत्वयोरनुपपत्तेः। पृथिव्यादेर-

विशेष्यत्वादितरभेदस्याप्रकारत्वाच्च । एवं विशेष्यताप्रकारतातिरिक्तोद्देश्यताविधेयतारूपातिरिक्तविषयतानभ्युपगमे पर्वते वह्निरित्यादिवाक्यजन्यशाब्दबोधस्य पर्वताद्युद्देश्यकत्वं वह्न्यादिविधेयकत्वमप्यनुपपन्नम् । पर्वतादेरविशेष्यत्वाद्वह्न्यादेरप्रकारकत्वाच्च ।

न च तत्र पर्वतवह्न्याद्योरुद्देश्यविधेयभावो नास्त्येव किन्तु विशेष्यविशेषणभावापन्नयोर्वह्निपर्वतवृत्तित्वाद्योरेवेति वाच्यम्, प्राङ्निर्दिष्टपदार्थस्यैवोद्देश्यतया चरमनिर्दिष्टस्यैव च विधेयतया तथावक्तुमशक्यत्वात् । अन्यथा वह्निः पर्वते पर्वते वह्निरित्यादिवाक्यजन्यशाब्दयोर्विशेष्यविशेषणभावे वैलक्षण्याभावेन वैलक्षण्यानुपपत्तेः ।

मन्मते तु प्रथमे वह्निपर्वताद्योरुद्देश्यविधेयभावो द्वितीये तु पर्वतवह्न्योरित्युद्देश्यविधेयभाववैलक्षण्यादेव तद्वैलक्षण्योपपत्तिः ।

न च नामार्थयोः साक्षादन्वयस्याव्युत्पन्नतया पर्वते वह्निरित्यादौ पर्वतवह्न्याद्योः कथमुद्देश्यविधेयभावेनान्वय इति वाच्यम्, अत्र परम्परयैव तथात्वोपगमात् । अथ शाब्दबोधे प्राङ्निर्दिष्टपदार्थस्यैवोद्देश्यत्वे चरमनिर्दिष्टपदार्थस्यैव च विधेयत्वे "लोहितोष्णीषा ऋत्विजः प्रचरन्ती"त्याद्योरुद्देश्यविधेयभावेनान्वयानुपपत्तिरिति चेत्-

न । समासातिरिक्तस्थल एव तादृशनियम इत्यादेरन्यत्र सुव्यक्तत्वात् ।

न च विधेयतानिरूपकत्वमेवोद्देश्यत्वमास्तां किं तस्यातिरिक्तत्वेनेति वाच्यम् । उद्देश्यतानिरूपकत्वमेव विधेयत्वमास्तामित्यस्यापि सुवचत्वात् । तस्माद्विनिगमनाविरहादुभयमेवातिरिक्तमित्याहुः—

तदसत् । तयोरतिरिक्तत्वेऽपि विषयतात्वे मानाभावात् ।

अनुमित्यादौ प्रत्यक्षसाधारणप्रकारतादिस्वीकारस्यावश्यकतयैव सविषयकत्वोपपत्तेः।

न च तदावश्यकत्वे मानाभाव इति वाच्यम्, तत्र तदनुपगमे तस्य बाधाद्यप्रतिबध्यत्वप्रसङ्गात्। प्रकारतादीनामेव तत्प्रतिबध्यतावच्छेदकत्वात्।

केचित्तु असति बाधकेऽभावसम्बन्धकल्पनापेक्षया भावसम्बन्धकल्पनाया लघुत्वेन तयोर्विषयतात्वाभावसम्बन्धकल्पनापेक्षया विषयतात्वसम्बन्धकल्पनस्य लघुतया तयोर्विषयतात्वसिद्धिरित्याहुः।

अत्र नवीनाः घटं साक्षात्करोमीत्याद्यनुव्यवसायविषयतया लौकिकविषयताऽप्यतिरिक्तोपेया। न च तादृशानुव्यवसायस्य घटादिविषयकप्रत्यक्षमेव विषय इति वाच्यं, तथा सति घटाद्युपनीतभानानन्तरमपि तादृशानुव्यवसायापत्तेः। तदानीमुपनीतभानात्मकघटादिप्रत्यक्षरूपविषयसत्त्वादित्याहुः—

नवीनमते लौकिकविषयताऽप्यतिरिक्ता

तदसत्। विषयतया तादृशानुव्यवसायं प्रति घटादिनिष्ठलौकिकसन्निकर्षादिघटितप्रत्यक्षसामग्रीजन्यघटादिविशेष्यकघटत्वादिप्रकारकप्रत्यक्षस्य तादात्म्येन हेतुत्वेनैव तादृशापत्तिवारणासंभवात्। न च तादृशसामग्रीजन्यत्वस्याननुगततया नोक्तरूपेण हेतुतेति वाच्यं, तादृशजन्यत्वसम्बन्धेन घटादिविशिष्टतादृशप्रत्यक्षत्वेन हेतुत्वसंभवात्।

नन्वेवमपि लौकिकविषयतानंगीकारे गगनाद्युपनीतभानानन्तरं गगनादिप्रत्यक्षविषयकस्य गगनं साक्षात्करोमीत्याद्यनुव्यवसायस्यापत्तिर्दुर्वारा। तत्र गगनादिनिष्ठलौकिकसन्निकर्षादिघटितप्रत्यक्षसामग्रीजन्यगगनादिप्रत्यक्षाप्रसिद्ध्या तस्य हेतुत्वासंभवात्।

न चैवं तादृशानुव्यवसायस्याप्रसिद्ध्यैव न तदापत्तिरिति वाच्यं, साक्षात्कारो न घटीय इत्यादिबाधबुद्धेः घटं साक्षात्करोमीत्याद्यनुव्यवसायं प्रति प्रतिबन्धकतायां घटत्वादिना घटादिरूपविषयभेदनिवेशेऽनन्तप्रतिबन्धकतापत्त्या तदनिवेश्य स्वीयप्रत्यक्षत्वावच्छिन्नविशेष्यतानिरूपितप्रकारितासम्बन्धावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन लौकिकमानसत्वावच्छिन्नं प्रति स्वीयप्रत्यक्षत्वावच्छिन्नविशेष्यतानिरूपिताभावनिष्ठप्रकारतानिरूपितप्रकारितासम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन निर्णयत्वेन विषयनिष्ठप्रत्यासत्त्या प्रतिबन्धकत्वस्य लाघवेन कल्पने गगनत्वादौ तादृशसम्बन्धावच्छिन्नप्रतियोगिताकबाधबुद्ध्यभावरूपकारणवशाल्लौकिकमानसत्वावच्छिन्नस्यापत्तौ क्रियमाणायां फलतो गगनं साक्षात्करोमीत्याद्यनुव्यवसायापत्तिसंभवात् ।

न च लौकिकविषयतांगीकारेपि कथं तदापत्तिवारणीयेति वाच्यं, तदङ्गीकारे स्वीयप्रत्यक्षत्वावच्छिन्नविशेष्यतानिरूपितलौकिकविषयतासम्बन्धावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन लौकिकमानसत्वावच्छिन्नं प्रति लौकिकविषयतावच्छेदकतासम्बन्धेन व्यवसायस्य हेतुत्वकल्पनया गगनत्वादौ तादृशहेत्वभावे नोक्तसम्बन्धेन लौकिकमानसत्वावच्छिन्नोत्पत्त्यसंभवेन तदापत्तिवारणासंभवादिति लौकिकविषयतास्वीकार आवश्यक इति चेत्—

लौकिकविषयताङ्गीकारखण्डनम्

नैवम् । आहार्यबाधबुद्धेरप्रतिबन्धकतयाऽनाहार्यत्वं तत्प्रतिबन्धकतायामवश्यं निवेशनीयम् । तच्च तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटमेव, अनुगताहार्यत्वस्य दुर्वचत्वात् । एवं च बाधबुद्धेर्विषयनिष्ठप्रत्यास-

स्या प्रतिबन्धकत्वे सकलाहार्यज्ञानव्यक्तिभेदकूटानामेकत्र निवेशे तेषां प्रत्येकं विशेष्यविशेषणभावे विनिगमनाविरहेणानन्तप्रतिबन्धकतापत्त्या गौरवमिति तत्तद्विषयकाहार्यज्ञानव्यक्तिभेदकूटं तत्तद्विषयघटितबाधबुद्धिप्रतिबन्धकतायां निवेश्यात्मनिष्ठप्रत्यासत्त्या विषयभेदेनैव बाधबुद्धिप्रतिबन्धकताया औचित्येनोक्तरीत्या गगनं साक्षात्करोमीत्याद्यनुव्यवसायापत्त्यभावेनातिरिक्तलौकिकविषयतांगीकारो निरर्थक एव । एतेनोक्तरीत्या बाधस्य विषयनिष्ठप्रत्यासत्त्या प्रतिबन्धकतया गगनत्वादावुक्तानुव्यवसायापत्तिः प्रकारान्तरेण वारणीया । तथा हि—अनुव्यवसायं प्रति लौकिकप्रत्यक्षसामग्रीजन्यव्यवसायस्य विषयं निवेश्य तद्भेदेन हेतुताकल्पने गौरवमिति तदपेक्ष्य स्वीयप्रत्यक्षत्वावच्छिन्नविशेष्यतानिरूपितप्रकारितासम्बन्धावच्छिन्नप्रकारतावच्छेदकतासम्बन्धेन मानसत्वावच्छिन्नं प्रति लौकिकप्रत्यक्षसामग्र्याः स्वातंत्र्येण स्वाश्रयवृत्तित्वसम्बन्धेन कारणत्वं कल्प्यते लाघवात् । वृत्तित्वं च स्वरूपसमवायान्यतरसम्बन्धेन बोध्यम् । गगनत्वादौ च कारणतावच्छेदकसम्बन्धेन लौकिकप्रत्यक्षसामग्रीरूपकारणाभावात्कार्यतावच्छेदकसम्बन्धेन मानसत्वावच्छिन्नोत्पत्त्यसंभवेनोक्तापत्तिवारणसंभव इति परास्तम् । उक्तरीत्या बाधस्यात्मनिष्ठप्रत्यासत्त्यैव प्रतिबन्धकत्वात् । विनश्यदवस्थलौकिकप्रत्यक्षसामग्रीजन्यव्यवसायोत्तरमप्यनुव्यवसायोत्पत्त्या तत्र व्यभिचारेणोपदर्शितरीत्या लौकिकप्रत्यक्षसामग्र्याः कारणताकल्पनासंभवेन विषयभेदेनैव व्यवसायानुव्यवसाययोः कार्यकारणभावस्यावश्यकतया तादृशसामग्र्याः विषयनिष्ठप्रत्यासत्त्या हेतुत्वेनोक्तापत्तिवारणासंभवाच्च । अथैवमपि घटाद्युपनीतभानानन्तरं

घटं न साक्षात्करोमीत्याद्यनुव्यवसायाविषयतया लौकिकविषयता-तिरिक्तोपेया । तादृशानुव्यवसायस्य घटादिविषकप्रत्यक्षाभाव-विषयकत्वे घटाद्युपनीतभानानन्तरं तादृशानुव्यवसायानुपपत्तेः । तदानीं घटादिविषयकप्रत्यक्षसत्त्वेन तदभावासत्त्वात् ।

न च लौकिकसन्निकर्षघटितप्रत्यक्षसामग्रीजन्यत्वाभावविशिष्टघटादिविशिष्टघटादिप्रत्यक्षमेव तादृशानुव्यवसायविषय इति वाच्यं, जन्यत्वाद्यनुपस्थितावपि तादृशानुव्यवसायोत्पत्तेरिति चेत्—

न । स्ववृत्तिलौकिकसन्निकर्षघटितप्रत्यक्षसामग्रीजन्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावविशिष्टप्रत्यक्षस्यैव तादृशानुव्यवसायविषयत्वे बाधकाभावात् । न चानेकपदार्थघटितस्य तस्य सम्बन्धत्वाभावान्नैवमिति वाच्यं, सांसर्गिकविषयतावत्त्वरूपसम्बन्धत्वस्य तत्रापि सत्त्वात् । तस्माल्लौकिकाविषयता नानतिरिक्तेति दिक् ।

अत्र केचित्—प्रवृत्तेर्विषयताप्यतिरिक्तावश्यमुपेया । एका साध्यत्वाख्याविषयता । सा च यन्निष्ठकृतिसाध्यताज्ञानादिना प्रवृत्तिस्तन्निष्ठा । तच्चासिद्धम् । घटयागपाकादिष्वेव न तु तज्जनकीभूतकपालहविस्तण्डुलादिसिद्धपतो न तत्र सा । न च तस्यां मानाभाव इति वाच्यं, घटादिसिद्धतादशायां(१) घटं करोमि यागं करोमीत्याद्यनुव्यवसायोदयेन घटं करोति यागं करोतीत्यादिव्यवहारोदयेन च तस्या आवश्यकत्वात् । अत एव कपालहविरादेः सिद्धतादशायां कपालं करोमि हविष्करोमीत्यादिर्नानुव्यवसायः । न वा कपालं करोति हविष्करोतीत्यादिव्यवहारः । कृधातुयोगे द्वितीयायाःसाध्यताख्यविषयतार्थकत्व-

(१) घटादेरसिद्धतादशायामिति 'क'पुस्तकपाठः ।

नियमात् । न च कृधातुयोगे साध्यताख्यविषयताया एव द्वितीयार्थत्वे कपालत्वादेः सिद्धतादशायां कपालं करोतीत्यादिव्यवहाराभाववत् कपालं घटवन्तं करोति तन्तुं पटवन्तं करोतीत्यादिव्यवहाराभावप्रसंग इति वाच्यं, साध्यवैशिष्ट्यबोधकपदा समभिव्याहृतकृधातुयोग एव द्वितीयायाः तादृशविषयतार्थकत्वनियमात् । कपालं घटवन्तं करोतीत्यादौ च कपालादिपदोत्तरद्वितीयाया वृत्तित्वमर्थः । मतुबन्तोत्तरद्वितीयायाश्च प्रयोजकत्वमर्थः । मतुबर्थश्च सम्बन्धः । तथा च कपालादिवृत्तिघटसम्बन्धादिप्रयोजकव्यापारकर्त्तेत्यन्वयबोधः ।

द्वितीया चोपादानत्वापरनाम्नी सिद्धत्वाख्यविषयता । सा न सिद्धकपालहविस्तण्डुलाद्युपायनिष्ठा । कपालेन घटं करोमि हविषा यागं करोमीत्याद्यनुव्यवसायव्यवहाराभ्यां तत्सिद्धिः । अन्यथा कपालेनेत्यादितृतीयार्थानुपपत्तेः । तत्रोपादानताख्यविषयताया एव तृतीयार्थत्वात् । तस्या धात्वर्थकृतावन्वयात् ।

न च तत्र जन्यत्वं विषयत्वं वा तृतीयार्थस्तस्य च घटयागादावेवान्वय इति वाच्यम् । सर्वत्र धात्वर्थ एव तृतीयार्थान्वयस्य व्युत्पन्नत्वात् । अन्यथा तण्डुलावयवेन तण्डुलं पचतीत्यादिव्यवहारापत्तेः । कपालेन घटं करोतीतिवत् कपालेन घटमानयतीत्यादिव्यवहारापत्तेश्च ।

न च धात्वर्थान्वितं विषयत्वमेव तत्र तृतीयार्थ इति वाच्यम् । तथा सति घटत्वेन घटं करोति हविष्ट्वेन यागं करोतीत्यादिव्यवहारापत्तेः । तस्मात्तृतीयार्थस्य धात्वर्थान्वयव्युत्पन्नत्वेन कपालेन घटं करोतीत्यादौ प्रवृत्तेरुपादानत्वाख्यविषयतां विना धात्वर्थे तृतीयार्थान्वयानुपपत्त्या प्रवृत्तेरुपादानत्वाख्यविष-

यतांगीकार आवश्यकः।अत एव कपालाद्युपादानप्रत्यक्षजन्यता-वच्छेदकमपि दुर्वचम् । उपादानताख्यविलक्षणविषयताशालिप्रवृत्तित्वस्यैव तज्जन्यतावच्छेदकत्वात् । तद्धर्मावच्छिन्नं प्रत्युपादान-प्रत्यक्षस्य घटादिजनकत्वप्रकारककपालाद्युपादानगोचरलौकिक-प्रत्यक्षत्वेन हेतुत्वादुपादानमत्र कारणम् ।

एवं प्रवृत्तेस्तृतीयोद्देश्यताख्यापि विषयता । सा च यत्सा-धनताज्ञानाधीना प्रवृत्तिस्तन्निष्ठा । तच्च जलाहरणादिस्वर्गादिना-दिरूपं फलमेव ।

न च तस्यां मानाभावः । जलाहरणार्थितया घटं करोमि स्वर्गार्थितया यागं करोमि जलाहरणमुद्दिश्य घटं करोमि स्वर्ग-मुद्दिश्य यागं करोमीत्याद्यनुव्यवसायव्यवहारयोरेव मानत्वात् । तदनंगीकारे जलाहरणाय घटं करोतीत्यादौ चतुर्थ्यर्थानु-पपत्तेश्च ।

न च तत्र विषयत्वमेव चतुर्थ्यर्थमिति वाच्यं, तथा सति घटत्वाय घटं करोतीत्यादिव्यवहारस्याप्यापत्तेः । तस्मादुक्तरी-त्या प्रवृत्तेरतिरिक्तविषयतात्रयमावश्यकमित्याहुः ।

प्राचीनानुयायिनां मते त्रैविध्यविषयतायां मानाभावः

अत्र प्राचीनानुयायिनः—प्रवृत्तेर्विषयतात्रैविध्ये मानाभा-वः । किन्तु कपालहविस्तण्डुलाद्युपाय एव प्रवृ-त्तिविषयो न तु साध्यो घटादिरुद्देश्यं फलं वा प्रवृत्तेरासिद्धविशिष्टसिद्धविशेष्यकत्वनियमेनासि-द्धघटादिविशिष्टसिद्धकपालाद्युपादानविषयकत्वस्यावश्यकत्वात् । प्रवृत्तिविषयत्वमेव चोपादानत्वम् । अथैवं घटं करोति यागं करोति पाकं करोतीत्यादिव्यवहारानुपपत्तिः । कृधातुयोगे द्वि-तीयाया विशेष्यतार्थकत्वानियमात् । अन्यथा कपालत्वं करो-तीत्यादिव्यवहारापत्तेरिति चेत्—

न । तत्र घटयागपाकादिपदस्य कपालहविस्तण्डुलादौ लाक्षणिकत्वात् । कृधातुयोगे द्वितीयाया विशेष्यतानुकूलत्वा-न्यतरार्थकत्वानियमेनानुकूलत्वस्य लक्षणया तत्र द्वितीयार्थत्व-संभवाच्च ।

न च लक्षणया शब्दप्रयोगरूपव्यवहारसमर्थनेऽपि घटा-दिविशेष्यकत्वावगाहित्वेनानुभूयमानायाः घटं करोमीत्यादिप्रा-त्यक्षिकप्रतीतिर्न समर्थितेति वाच्यं, तादृशानुभवस्यैवासिद्धेः । अन्यथा भावत्वेनानुभूयमानतमःप्रत्यक्षानुरोधेन तमसोपि भावत्वांगीकारापत्तेः ।

न च लक्षणायां मानाभाव इति वाच्यं, घटं करोतीत्यादि-प्रयोगानुपपत्तेरेव मानत्वात् ।

न च लक्षणाकल्पने गौरवेण लाघवादतिरिक्तविषयतास्वी-कार एवोचित इति वाच्यं, लाघवेनातिरिक्ताविषयतासिद्धेः । प्र-तिबन्दिसहस्रकवलितत्वात् । एतेन प्रवृत्तिं प्रति कृतिसा-ध्यतादिज्ञानहेतुत्वानुपपत्त्या साध्यतादिविषयतासिद्धिः । प्रवृ-त्तिविषयत्वस्योपादानादिसाधारण्येन तदनुपगमे व्यभिचारप्र-सङ्गादिति नव्योक्तमपि परास्तम् । सिद्धस्योपादानस्यैवासिद्धो-परागेण प्रवृत्तिविषयत्वात् । कृतिसाध्यताज्ञानादिविषयत्वाच्च। साध्यत्वं च योगक्षेमसाधारणं जन्यत्वमेव । उद्देश्यत्वं च प्रयोज-केच्छाविशेष्यत्वमेव । एवं च जलाहरणाय कपालेन घटं करो-तीत्यादौ निरुक्तोपादानत्वादिकमेव तृतीयाद्यर्थ इति न कोऽपि प्रागुक्तदोषः ।

वस्तुतस्तु साध्यस्यैव घटादेः प्रवृत्तिविषयत्वं नोपादानस्य कपालादेर्न वा फलस्य जलाहरणादेः । असिद्धस्यैव स्वजन्यस्य प्रवृत्तिविषयत्वस्वाभाव्यात् । प्रवृत्त्युपादानत्वं च प्रवृत्तिविषयज-

नकत्वमेव । तदेव च कपालेनेत्यादौ तृतीयार्थो धात्वर्थान्वयि साध्यत्वम् । उद्देश्यत्वं च पूर्वोक्तमेव । तदेव च द्वितीयार्थः। चतुर्थ्यर्थश्च सोपि धात्वर्थान्वय्येव । प्रवृत्तिविषयताया उपादानादावभावान्न प्रवृत्तिं प्रति कृतिसाध्यतादिज्ञानहेतुतायामनुपपत्तिः ।

यत्तु निरुक्तसाध्यत्वादिघटकजन्यत्वाद्यनुपस्थितावपि साध्यत्वाद्यवगाहिन्या जलाहरणाय कपालेन घटं करोमीत्याद्याकारकप्रतीतेरनुभवसिद्धतया साध्यतोपादानतोद्देश्यताख्यातिरिक्तप्रवृत्तिविषयतांगीकार आवश्यक इति नव्यैरुक्तम्—

तदप्यसत् । तादृशानुभवस्यैवासिद्धेः । अन्यथा व्याप्त्यादिघटकानामभावादौ हेतुसामानाधिकरण्यादीनामनुपस्थितावपि व्याप्त्यादिप्रतीतेरनुभवसिद्धतया व्याप्त्यादेरप्यतिरिक्तत्वापत्तेः। यदि च स्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणवृत्तित्वविशिष्टस्वाश्रयत्वसम्बन्धेन धूमत्वादिकमेव व्याप्तिस्तत्र च नोक्तदोषः । सम्बन्धघटकोपस्थितेरनपेक्षणादिति विभाव्यते तथापि न क्षतिः । प्रकृतेऽपि स्वाश्रयजन्यत्वसम्बन्धेन प्रवृत्तित्वमेव साध्यत्वम् । स्वाश्रयविषयजनकत्वसम्बन्धेन तदेवोपादानत्वम् । स्वाश्रयप्रयोजकेच्छाविशेष्यत्वसम्बन्धेन तदेवोद्देश्यत्वमित्यस्य सुवचत्वात् । एवं चातिलाघवमपि। एकस्यैव सम्बन्धभेदेन व्यवहारभेदजनकतया एकेनैव निर्वाहादिति निपुणमालोचनीयम् ।

नन्वेवं ज्ञानादिविषयताप्यतिरिक्ता मास्तु । ज्ञानादिरूपविषयतयैव निर्वाहसम्भवात् । तथाहि विशिष्टबुद्धौ तावत्प्रतियोगित्वानुयोगित्वयोर्मानं स्वीक्रियते । घट इति ज्ञाने च घटत्वविषयतानिरूपिता प्रतियोगित्वस्य विषयता तन्निरूपिता समवायस्य तन्निरूपितानुयोगित्वस्य तन्निरूपिता घटस्य । तत्र च प्र-

तियोगित्वानुयोगित्वविषयतयोरपि परस्परं निरूप्यनिरूपकभावं स्वीक्रियते ।

एवं च सामान्यतो विषयता ज्ञानरूपैव । सैव स्वनिरूपितत्वस्वनिरूपितानुयोगित्वविषयत्वानिरूपितत्वोभयसम्बन्धेन प्रतियोगित्वविषयताविशिष्टा विषयताप्रकारतास्वनिरूपितत्वस्वनिरूपितप्रतियोगित्वविषयत्वाऽनिरूपकत्वोभयसम्बन्धेनानुयोगिताविषयताविशिष्टाविशेष्यता । उक्तयोः प्रकारताविशेष्यतयोस्संसर्गत्वानिरूपितत्वमपि विशेषणं देयम् । तेनानुयोगित्वस्य विषयता न प्रकारता । प्रतियोगित्वस्य च न विशेष्यता प्रसज्यते । संसर्गता च परस्परनिरूपिताभ्यां प्रतियोगित्वानुयोगित्वविषयताभ्यां निरूपिताविषयतेति सर्वनिर्वाहात् । निरूपितत्वादिकं चातिरिक्तमनतिरिक्तं वेत्यन्यदेतत् । विषयतातिरिक्तत्ववादिनापि तदतिरिक्तत्वाभ्युपगमात् । अत एव घटपटावित्यादिसमूहालम्बनादीनां भ्रमत्वाद्यापत्तिरपि पूर्वोक्ता निरस्तेति चेत्—

अस्तु ज्ञानादिविषयताप्यनतिरिक्ता तत्राप्यस्माकमग्राहाभावात् । प्राचीनविद्वेषिणां नवीनानामेव तत्राग्रहात् । मिश्रादीनामप्यत्रैव पक्षे स्वारस्याच्चेति वदन्तीत्यधिकमूह्यं सुधीभिरित्यलं विस्तरेण ।

प्रत्यक्षचिन्तामणिमिश्रदीधित्यादिप्रबन्धानवलोक्य भूयः ।
संक्षेपतो वर्णितमत्र सम्यक् प्रत्यक्षतत्वं बहुयुक्तियुक्तम् ॥

इति श्रीमत्पदवाक्यप्रमाणज्ञश्रीमन्मुकुन्दपण्डितात्मजपुणतामकरोपनामकमहादेवपण्डितविरचिते श्रीन्यायकौस्तुभे प्रत्यक्षकौस्तुभः समाप्तः ।

# प्रत्यक्षकौस्तुभस्य शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १ | ८ | -शास्त्री- | -शास्त्र- |
| २ | ४ | प्रची- | प्राची- |
| २ | ६ | -ति । वि- | -ति वि- |
| २ | १६ | मङ्गलस्व- | मङ्गलत्व- |
| २ | २४ | अनुपत्ते- | अनुपपत्ते- |
| ३ | १२ | द्वयमु- | द्वयमप्यु- |
| ३ | १६ | पदास- | यदा स- |
| ३ | १७ | अहः | अहम् |
| ३ | १८ | -षयताभा- | -षयाभा- |
| ४ | ६ | -षयिता- | -षयता- |
| ५ | १९ | -चाररूपग्र- | -चारद्वयग्र- |
| ६ | १ | -नेना | -ने ना- |
| ६ | ९ | -त्वे न | -त्वेन |
| ६ | ११ | -ज्ञानवि- | -ज्ञानग्रहवि- |
| ६ | १४ | -न्यवि- | -न्यत्ववि- |
| ६ | २० | -यद्- | -पाद्- |
| ७ | ४ | तद्ध- | तद्ध- |
| ७ | ५ | -यं स- | -यस- |
| ७ | १५ | -णा- | -ण- |
| ७ | १६ | -नवि- | -नावि- |
| ८ | १४ | -साध्या- | -साध्यता- |
| ९ | १२ | प्रमात्ता- | प्रमता- |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ८ | १७ | -ह्र वा- | -हे वा- |
| ९ | १८ | स्वयन्तत्रप्रमाणेत्यादि 'ख' पुस्तकपाठो न सम्यक् | |
| १० | २० | -षाभावात् | -षासम्भवात् |
| १० | २१ | -कशि- | -कहेतुप्रविष्टशि- |
| ११ | ६ | -जानीय- | -जातीय- |
| १२ | १५ | -येन | -ये न |
| १३ | ६ | -हारो- | -हारौ- |
| १३ | २० | -पा | -पा- |
| १४ | १८ | -क्यात् । | -क्यात् |
| १५ | २ | प्रवृत्त्यनुत्पत्त्येति 'ख' पुस्तकपाठः । | |
| १५ | ५,१७ | -लेन | -ले न |
| १५ | ६ | -तापप- | -ताप- |
| १५ | २१ | -गो द्वष्टं | -गोऽद्दष्टं |
| १५ | २४ | -त्वरूपे वे- | -त्वस्त्येवे- |
| १६ | १ | सामानाधिकरण्यानां | × |
| १६ | २१ | -त्थर्थः | त्यर्थः |
| १७ | ७ | भावे वेत्यारभ्य सम्भवादित्यन्तोग्रन्थः 'ख' पुस्तके नास्ति | |
| १७ | १३ | -देशः। स- | -देशः । स- |
| १७ | १४ | -ताव- | -तावव- |
| १७ | १७ | -रिणिः | -रणिः |
| १७ | २२ | तत्त्वौ- | न त्वौ- |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १८ | १३ | -न्द्रे | -न्द्रं |
| २० | १४ | सर्वा वा वा- | सर्वाङ्गवा- |
| २० | १४ | -मापन्नं गोचरं प्र- | -मापन्नगोचरप्र- |
| २१ | ५ | -तेन | -नेन |
| २३ | १० | -पा । व्या- | -पा व्या- |
| २६ | २० | -त्तं | -त्त |
| २७ | ८ | -त्वानेनै- | -त्वा तेनै- |
| २९ | १ | -वस- | -वः स- |
| २९ | ४ | न चैव | नन्त्रेव |
| २९ | १० | -द्य घ- | -द्यघ- |
| २९ | २२ | -णप्र- | -णाप्र- |
| ३० | २२ | -त्वे | -त्वं |
| ३२ | १ | -हे सा | -हसा |
| ३२ | ९ | ज्ञानास्क- | ज्ञानानास्क- |
| ३२ | २१ | -त्तादु- | -त्ताबु- |
| ३२ | २१ | -नां | -ना |
| ३२ | २२ | -त्वेन हे- | -त्वेन तत्र हे- |
| ३३ | २२ | -सिद्ध | -सिद्धि |
| ३६ | १ | -त्येवं | -त्यव |
| ३६ | १२ | -ताया | -ता या |
| ३७ | १९ | तदभेदेऽपि | तदभेदेन तदभेदेऽपि- |
| ३७ | २४ | -वप्र- | -ताप्र- |
| ,, | ,, | -त्वत्व- | -त्कत्व |
| ४० | १ | -णक- | -णताक- |
| ४१ | ४ | -तरे- | -तेरे- |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ४१ | १७ | अत्र | अत्र |
| ४२ | ३ | मतेन | मते न |
| ४२ | ७ | -त्वज्ञान | -त्वज्ञानस्य ज्ञान- |
| ४४ | १ | -लघ | -लाघ |
| ४४ | १ | -त्वेनाव- | -त्वेनानव- |
| ४४ | १७ | न तु | न नु |
| ४६ | ९ | -च । त- | -च त- |
| ४६ | १९ | -त्तव्या- | -त्तद्व्या- |
| ४७ | ९ | -तोऽश्व- | -ताश्व- |
| ४८ | ५ | न | तेन |
| ४८ | ८ | -वः । प्र- | -वः प्र- |
| ४८ | २१ | विशेष्यत्व- | -विषयत्व- |
| ५० | ९ | -सिद्धप्र- | -सिद्धत्वं यच्च प्र- |
| ५० | ९ | -भावत्वे | -भाववत्त्वे |
| ५१ | १० | स ध- | सध- |
| ५१ | १३ | -नफ- | -नमफ |
| ५१ | २१ | स ध- | सध- |
| ५२ | ६ | -दि- | -दे- |
| ५२ | २५ | -विषय- | -विषयि- |
| ५३ | २४ | शेष्य- | शेष्यि- |
| ५३ | २५ | घट | पट |
| ५४ | ७ | -षयि- | -षय- |
| ५४ | ११ | -धः । स्व- | -धः स्व- |
| ५४ | १२ | ते लौ- | तेलौं- |
| ५५ | ६ | -शी- | -श्यी- |

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ५५ | ८ | -केन | -कें न |
| ५५ | ९ | -न्त्यं ज्ञा- | -न्त्यज्ञा- |
| ५५ | ९ | -क्ता प्र- | -क्ताऽप्र- |
| ५६ | १५ | -ज्म्भा- | -ज्ज्ञा- |
| ५६ | २२ | घट | पट |
| ५७ | १२ | -न्त्या- | -न्त्यां- |
| ५८ | १० | -रन्य- | रप्यन्य- |
| ५९ | १९ | -ज्ञानतद्धि- | -ज्ञानाद्धि- |
| ५९ | २० | -मता ज्ञा- | -मत्ताज्ञा- |
| ५९ | २३ | -यवोप- | -यवोपप- |
| ६० | २ | -वता- ; -मिति- | -वत्ता- ; -मिते- |
| ६० | २४ | -तज्ज्ञात- | तज्ज्ञान- |
| ६१ | २१ | न कदा | -नैकदा |
| ६३ | ८ | -माण्या- | -माण्य- |
| ६३ | २३ | -न्ना- | -न्न- |
| ६५ | ७ | -मन्ना- | -मत्ता- |
| ६५ | २० | -स्याप्रा- | स्य प्रा- |
| ६५ | २१ | -नं विशेष्य | नं, विशेष्य |
| ६६ | ४ | -त्रं त | -त्रं न त- |
| ६६ | १० | -टत्वविशेष्यत्व- | -टविशेष्यकत्व- |
| ६६ | १७ | -न्तुके हे- | -न्तुकहे- |
| ६७ | ४ | वता नि- | -वत्तानि- |
| ६७ | १७,२३ | -णासं- | -णासं- |
| ६८ | १९ | -णाद्या- | -णाद्द्य- |
| ६९ | २० | -त्वधी- | -त्वनधी- |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ७० | २ | -न्नेन- | -न्ने न |
| ७० | ९ | एवं | एव |
| ७० | १५ | रङ्गत्वादिमत्तया | रजतत्वाभाववत्तया |
| ७१ | ५ | -णान्नि- | -णतावन्नि- |
| ७३ | १५ | -त इ- | ते इ- |
| ७४ | १४ | -तीस | -तीयस- |
| ७४ | २२ | -शताद्दृशप्र- | -शप्र- |
| ७५ | २३ | -त्ति- | -त्ते- |
| ७६ | २२ | -नाख्या- | -नख्या- |
| ७८ | ५ | ग्र्येवा- | -ग्र्यैवा- |
| ७८ | १३ | वो ख्या- | -वोऽख्या- |
| ७९ | १२ | -पदं | -पादं, |
| ७९ | १४ | -ह्नि वा | -ह्नित्वा- |
| ७९ | २२ | -भावो | -भानो- |
| ७९ | २३ | -वं | -नं |
| ७९ | २५ | -प्यनु ; मननात्तुम- | -प्यननु- ; मम नानुम- |
| ८० | १७ | तद्धर्मा- | ननु तद्धर्मा- |
| ८० | १८ | न तु तद्धर्मा- | तद्धर्मा- |
| ८० | २२ | -भावत्वा- | -भाववत्त्वा- |
| ८० | २३ | -त्वे नतु | -त्वं, न तु |
| ८१ | १० | -न्ना मा- | -न्नाभा- |
| ८१ | २४ | -मनु- | -मननु- |
| ८३ | १४ | -कस्या- | -कत्वस्या- |
| ८४ | २५ | र्शशि- | -र्शं शि- |
| ८५ | ३ | -भाव- | -भान- |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ८६ | ६ | -रभ्यु- | -रनभ्यु- |
| ८७ | ८ | श्यां | -श्या |
| ८७ | १० | -मे ता- | -मे |
| ८७ | १७ | -द्धेः । त- | -द्धेः त- |
| ८८ | १४ | -यादि- | यादिघटित- |
| ८९ | १५ | -तां ज्ञानाभावक- | त्ताज्ञानाभावकू- |
| ८९ | २२ | निश्चाय | -निश्चय |
| ९० | १ | हस- | -हास- |
| ९० | १७ | र्गाग्र | -र्ग्रग्र- |
| ९१ | १ | -षत्वा- | -षयत्वा- |
| ९१ | ३ | त्ति- | -ति- |
| ९१ | १४ | -यकघ- | -यघ- |
| ९१ | १७ | रजतत्वादि | रजतमित्यादि |
| ९१ | १८ | -च्च । दो- | -च्च दो- |
| ९१ | १९ | -स्यापत्ति | -स्याद्यापत्ति- |
| ९१ | २१ | शाज्ञा- | -शज्ञा- |
| ९१ | २३ | -त्ति सा- | -त्तिसा- |
| ९१ | २४ | स्येव | -स्यैव |
| ९१ | २५ | -ङ्काज्ञा- | -ङ्का ज्ञा- |
| ९२ | २ | त्वा, | -त्व- |
| ९२ | ४ | -ष्ठोभ- | -ष्ठु उभ- |
| ९२ | ५ | घा वि- | -घोवि- |
| ९३ | १४ | -णास- | णस- |
| ९३ | १४ | -मेन त- | -मे त- |
| ९४ | ३ | -त्पादि- | त्पाद्- |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| २४ | ८ | तत् । | तत् |
| ९४ | १३ | ·पत्ति· | ·पर्पत्ति· |
| ९५ | १४ | ·या सा· | ·याऽसा· |
| ९५ | २३ | ·त्वसा· | ·त्व· |
| ९६ | १४,१६ | ·षा· | ·ष्वा· |
| ९६ | २२ | ·ति । | ·ति |
| ९८ | २० | ·ति । | ·ति |
| ९९ | ७ | ·ता न | ·ताया न |
| ९९ | १४ | लेन | ·ले न |
| १०० | २ | ·वस्त्वा· | ·वह्वया· |
| १०१ | २२ | ·गोऽपि | ·गेऽपि |
| १०२ | ६ | ·पग्र | पाग्र· |
| १०२ | १६ | ·तयि· | ·तीय |
| १०५ | १४ | ·त्मनः सं· | ·त्ममनःसं· |
| १०५ | २५ | ·सेन | ·से न |
| १०६ | ३ | ·त्वेन | ·त्वं न |
| १०६ | १२ | ·स्याहे· | ·स्य हे· |
| १०७ | १७ | ·वान्ना· | ·वाना· |
| १०८ | १३ | ·क्षा· | ·क्ष· |
| १०८ | २४ | ·तेंना· | ·त्तेंऽन· |
| १०९ | ६ | ·ते । त्व· | ·ते । तथा हि त्व· |
| १०९ | २० | ·तवि· | ·तत्त्ववि· |
| ११० | १ | वायः स्प· | वायुस्प· |
| ११२ | ९ | घ्रति | प्रति |
| ११२ | ११ | प्राण | घ्राण |

| पृष्ठे | पङ्क्तौ | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ११२ | १४ | त्वज- | त्वं ज- |
| ११३ | १ | -वत्समवेतस | वत्स- |
| ११३ | ५ | दात्वे | -दात्मत्वे |
| ११४ | १७ | -ग्री। तत्र | ग्रो तत्र, |
| ११४ | १७ | -ये न | -येन |
| ११४ | २५ | न्न प्र- | न्नं प्र- |
| ११६ | १५ | नाया भावनायाः | नायाः |
| ११६ | १७ | मात्म- | -मनात्म- |
| ११६ | १७ | -णासम्भवात्। | -णसम्भवात् |
| ११६ | १८ | याः प्रा- | -या अप्रा |
| ११६ | २० | दुर्वचनया | दुर्वचतया |
| ११७ | १ | -हेण- | हेन |
| ११७ | ५ | समेवे- | समवे- |
| ११८ | १७ | मिति। अ- | मिति अ- |
| ११८ | १८ | ताक- | ता क- |
| ११९ | २ | -त्वनो- | -त्मनो- |
| २१९ | ९ | -दिति | -दिति। |
| ११९ | २३ | -स्य स | -स्य सास- |
| १२० | १७ | -वे न | -वेन |
| १२० | १७ | -णसं- | -णासं- |
| १२० | १९ | -षियैः | -विषयैः |
| १२१ | १८ | -करणतायाः सुखादिप्रत्यक्षे मनसः | ० |
| १२१ | १८ | -त्वे चास्य | -त्वस्य च |
| १२२ | १० | -जकं | -जनकं |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
| --- | --- | --- | --- |
| १२३ | १६ | ·दिना, चक्षुः· | दिना, द्रव्यसमवेतसमवेतचाक्षु·षत्वाद्यवच्छिन्नं प्रति चक्षुः· |
| १२५ | १४ | ·त्तेदु· | ·त्तेर्दु· |
| १२६ | २ | ·तया· | ·ताया· |
| १२६ | ५ | ·तद्भ· | ·तद्भे· |
| १२६ | १४ | ·ये प्र· | ·यप्र· |
| १२६ | १६ | ·लेना | ·ले ना· |
| १२६ | १७ | ·त्तिः। | ·त्तिः |
| १२६ | १८ | मृते | मतं |
| १२७ | ६ | ·न्धे स· | ·न्धस |
| १२७ | ११ | ·स्याप्य | ·स्याव्याप्य |
| १३० | १ | ·ज्ञानं प्रति | ·ज्ञानं |
| १३० | १६ | ·द्धया· | ·द्धया |
| १३१ | ६ | इति। | इति |
| १३२ | ११ | तीति। | ·तीति |
| १३३ | १२ | ·णता· | ·णतान्य· |
| १३३ | १६ | नन्वेवं | नन्त्वेवं |
| १३४ | २० | तन्वता | तन्त्वा· |
| १३४ | २२ | ·को· | ·कथो· |
| १३४ | २४ | ·द्धा· | ·द्धया· |
| १३५ | २३ | ·म्बन्ध | ·म्बद्ध |
| १३६ | ११ | न विशेषण· | न विशेषणविशेषण· |
| १३७ | १४,१५ | साध्व | साध्य |
| १३७ | २३ | ·त्तिप· | ·त्ति, प· |
| १३८ | ३ | ·णामे· | ·णभे· |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १३८ | १३ | ·हेन | ·हे न |
| १३९ | १७ | पठान्ति | पटक्प्रति |
| १४० | १ | ·रवा | ·रावा· |
| १४० | ९ | ·तत्रा· | तन्ना· |
| १४० | ११ | ·विशि· | ·वि· |
| १४० | १४ | ·णत्वम् । | ·णत्वं |
| १४० | १६ | ते । उ· | ·ते उ· |
| १४० | १८ | ·त्वम् । कि· | त्वं कि· |
| १४० | १९ | ·णं वि· | ·णम् । वि· |
| १४१ | ९ | ·स्वव्य· | ·स्वाव्य· |
| १४२ | १८ | ·भावा· | ·भाव· |
| १४३ | १६ | ·टासा· | ·टादिसा· |
| १४३ | १६ | तत्प· | तद्ग· |
| १४३ | १७ | ·वात्स्या | ·वानस्या |
| १४४ | ४ | ·तस्यान | तस्मान्ना· |
| १४४ | १२ | ·न्मदम् | ·न्मन्दम् |
| १४४ | १३ | ·व्यप· | ·व्यय· |
| १४६ | ३ | ·तो भा· | ·तोऽभा· |
| १४६ | ५ | ·वत्तु | ·वद्गु· |
| १४६ | १५ | प्रति | प्रती· |
| १४७ | ८ | ·मवाय· | ·मय· |
| १४८ | १४ | ति तत्र | ·ति । तत्र |
| १४८ | २५ | ·गिकत्व | ·गित्व |
| १४९ | ८ | ·न वि· | ·नस्य वि· |
| १५० | ६ | ·कार· | ·कारि· |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १५१ | १९ | णवि· | ·णावि· |
| १५१ | २२ | ·हितप· | ·हिताप· |
| १५२ | ५ | ·मन्त· | ·मनन्त· |
| १५२ | ७ | ·भ्रा· | ·भा· |
| १५२ | १३ | ·रूपे | ·रूपं |
| १५२ | १५ | ·त्वध· | ·त्वं, ध· |
| १५२ | २१ | णो | ·णां |
| १५३ | ५ | योनोत्पत्तिः | तेनोत्पत्तिः |
| १५३ | १६ | ·क्तख्या· | ·क्ताख्या· |
| १५४ | ९ | एते नश्तावा | एतेन स्तां वा |
| १५४ | १० | दोषा | देशा |
| १५४ | ११ | ·द्यो· | ·द्यो· |
| १५४ | १५ | ·षेऽपि | षोऽपि |
| १५५ | ५ | ·त्तेः । का· | ·त्तेः का· |
| १५५ | ७ | ·णास· | ·णस· |
| १५५ | ९ | ·क्षण· | क्षणा, लक्षण |
| १५५ | ९ | ·स्य वि· | ·स्यावि· |
| १५५ | १२ | ति । स· | ·ति स· |
| १५५ | २४ | ·द्यन्ता· | ·द्यत्यन्ता· |
| १५६ | ६ | र्य्यंका· | ·र्य्यंका· |
| १५७ | १६ | ·नो पू· | ·नः पू· |
| १५७ | १६ | ·वाद्यये· | ·वाग्रे· |
| १५७ | १८ | ·ना· | ·नां· |
| १५७ | २१ | ·द्यान· | ·द्या· |
| १५८ | ७ | त्तिर्वि· | ·त्तिवि· |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १५८ | १६ | ·द्वौ | ·द्धौ |
| १५८ | १६ | गा· | ·ग· |
| १५८ | २० | ·येन | ·ये न |
| १५८ | २१ | ·यस्त· | ·यविस्त· |
| १५९ | १४ | ·कस्य न | ·कस्य । न |
| १५९ | २० | इन्वि | इन्द्रिय |
| १६० | १ | ·नेह· | ·नं हे· |
| १६० | १७ | ·दौ प्र | ·दौ न प्र· |
| १६१ | ६ | ·ध्यौ | ·ध्यौ |
| १६१ | ९ | ·दक· | ·दकक |
| १६२ | २ | ·सोन· | ·सन्नि· |
| १६४ | ७ | ·तावि· | ·तवि· |
| १६४ | १८ | ·चन· | ·चान· |
| १६६ | ६ | ·वादिति | ·नादिति |
| १६७ | २५ | ·नेवे· | ·नैवे· |
| १६९ | २१ | ·नादि· | ·नत्वादि· |
| १७० | १२ | ·क्षुसं· | ·क्षुस्सं· |
| १७४ | ८ | ·निर्ण· | ·कनिर्ण· |
| १७५ | २३ | ·ह्विवि· | ·हिर्वि· |
| १७७ | १९ | ·नाभा· | ·नेऽभा· |
| १७७ | २३ | ·लेने· | ·ले ने· |
| १७८ | १७ | ·मे नो | ·मेनो· |
| १७९ | ७ | ·त्वेने | ·त्वेन ने· |
| १७९ | ८ | ·पिन प्र· | ·पि प्र· |
| १७९ | १० | ·का । अ· | ·का स· |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १८० | २५ | ·पत्त्या· | ·यत्त्या· |
| १८१ | ८ | ·रभा· | ·राभा· |
| १८१ | १२ | ·नेनो· | ·ने नो· |
| १८१ | १४ | घट ध्वं· | घटध्वं· |
| १८२ | ८ | ·णवृ· | णावृ· |
| १८२ | २३ | ·धिक· | ·नधिक· |
| १८२ | २५ | त्तिमत्वात् | त्तित्वात् |
| १८३ | ६ | वद्य· | ·वाद्य· |
| १८४ | ९ | ·ण· | ·णं· |
| १८४ | १५ | ·कत्वो· | ·कं स्वो· |
| १८४ | १६ | ·त्वम् । | ·त्वं |
| १८६ | ७ | त्याप· | ·त्यादिकार्योपप· |
| १८६ | ८ | ·व । वि· | ·व वि· |
| १८६ | १४ | ·मे तदेव न | ·मे, तदेव न, |
| १८६ | १५ | मेऽप्यव्या· | ·मय्यव्या· |
| १८८ | ४ | न । एवं | ·न एवं |
| १९१ | ८ | ·द्वौ वा· | ·द्वयं वा· |
| १९२ | ३ | ·पि· | ·यि· |
| १९३ | १२ | ·मेव | ·मेवं |
| १९६ | २ | ·भावात् | ·भानात् |
| १९६ | १४ | ·यमा· | ·य भा· |
| १९७ | ४ | ·यमा· | ·य भा· |
| १९७ | ९ | ·मान· | ·भान· |
| १९९ | २१ | ·ष्यता· | ·ष्यत्वाख्यविषयता |
| २०१ | १० | सिद्धेनं | ·सिद्धेन |

| पृष्ठे | पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| २०२ | २३ | ·क्तिप्र· | क्तिर्वृत्तिप्र· |
| २०५ | ८ | ·द्धि· | ·द्द्धि· |
| २०८ | १० | ग्र्या | ग्रा· |
| २०८ | १३ | वात् | नात् |
| २१२ | १४ | मयुक्तम् । | प्रयुक्तं |
| २१३ | ७ | बोध्य | बध्य |
| २१५ | २२ | कः । स्व | कः स्व |
| २१६ | ७ | यम् । विशेष्यं | यं विशेष्यं |
| २१७ | १५ | ज्ञ्या· | ज्ञा· |
| २१७ | २२ | वाचस्पतिमिश्रैः | पक्षधरमिश्रैः |
| २१८ | २ | ·घ्स्य· | ग्र्था· |
| २१९ | ४ | ·बु विशिष्टो | बुद्धिविशिष्ट |
| २१९ | ६ | णम् , | ·णं |
| २१९ | ६ | ·शिष्टं | ·शिष्टे |
| २२० | ४ | ष्टवै | ष्टे वै |
| २२० | ११ | ·तदनु· | ·तद्नु· |
| २२० | १३ | प्रकारता | कारणता |
| २२१ | ११ | स्य तादृशविषयताशालित्वे बाधकाभावेन तथावक्तुमशक्यत्वात् । न च भवन्मतेऽपि तादृशपरामर्श | ० |
| २२३ | १५ | ·तासा | तसा· |
| २२४ | १० | ·कोषा | ·कोट्या· |
| २२५ | ४ | ·वा । प· | ·वाप· |
| २२५ | २२ | ·त्वफ· | ·त्वक· |

# शुद्धिपत्रम् ।

| पङ्क्तौ | अशुद्धम् । | शुद्धम् । |
|---|---|---|
| २ | -कमस्ति | -मस्ति |
| १५ | -वेन | नेन |
| ६ | क्षेर्दु- | -क्षिर्दु- |
| १० | रोधि | -रोध- |
| २२ | -पत्त्या | -यत्त्या |
| १५ | च्यं, व्या | -च्यम् , अव्या- |
| २० | -नेऽनु | -न उ- |
| २३ | पट- | घट- |
| ७ | क्तुमश- | क्तं श- |
| १८ | ममप्य- | -मथ्या- |
| ३ | संसर्गताथाः संसर्ग- | संसर्गतायाः संसर्गनिष्ठावच्छेदकतारूपतया संसर्गावच्छिन्नत्वस्य च संसर्ग- |
| १३ | -तातै- | -तावतै- |
| १० | स्यैव | -स्येव |
| ४ | -रकत्वा- | -रत्वा- |
| १९ | णासं- | -णसं- |
| २० | ,, | ,, |
| १७ | द्धम् । घटयागपाकादिष्वेव | द्धं घटयागपाकादि |
| ११ | न सि- | तु सि- |
| २ | -पि दु- | -पि नदु- |
| १९ | त्रैविध्यविषयतायां | विषयतात्रैविध्ये |
| ६ | -नायाः | -ना |
| १३ | -द्धेः । प्र- | -द्धेः प्र- |
| १ | -पि सा- | -यि, सा- |
| १३ | र्मा- | -र्भा- |

# INDEX.

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Rañgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentray on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6—(Part I)-The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-The Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagnnātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10

No. 9—(Part I)-The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed. with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya, (Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-14

No. 15-( Part-II )—Do. Do. Rs. 2-4

No. 15-( Part III )—Do. Do. Rs. 2-0

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hosing Sāhityopādhyāya. Rs. 1-2

No. 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs 0-14

No. 18-(Part I)-The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0-14

No. 19-( Part. I )-The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2-4

No. 19-( Part.II ) Ditto Ditto Rs. 2-12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20-The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0-12

No. 21-( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1-2

No. 21-( Part-II ) Ditto Ditto Rs. 2-0

No. 22-The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares.

No. 23-Navarātrapradipa by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrīt College, Benares.

No. 24-The S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.

Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Āchārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs 3-12

No. 25-The Sāpiṇḍyakalpalatikā by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4.

No. 26-The Mṛgāṅkalekhā Nāṭikā by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27-The Vidvachcharita Pañchakam By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Library, Sarasvati Bhavana, Benares. With an Introduction by Gopināth Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs 2-0

No. 28-The Vrata Kos'a by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs. 4-0

No. 29-The Vṛitti dīpikā By Mauni S'rī Kṛṣna Bhatta.
Edited with Introduction etc by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares.

No. 30-The Padārtha Maṇḍanam By S'rī Venīdatta.
Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares.

No. 31 (Part I)-The Tantraratna by Pārtha Sārathi Mis'ra.
Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt, Vice-Chancellor, Allahabad University, Allahabad.

No. 32-The Tattvasāra by Rākhāldasa Nyāyaratna.
Edited with Introduction etc. by Harihara S'astri, Benares Hindu University.

No. 33-The Nyaya Kaustubha (Part I) by Mahadeva Puntamkar.
Edited with Introduction etc. by Umes'a Miśra, M. A., Allahabad University, Allahabad.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1–12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgānātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā nātha Jha.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans. by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G.L. Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha nātha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinātha Kavirāj.

(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhamaha and his Kavyalankara, by Batukanatha S'arma and Baladeva Upadhyaya.

(b) Some variants in the readings of the Vais'eṣika Sutras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the Correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayana, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J. A. Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the term Parārdha, by Umes'a Mis'ra.

Vol. VIII. (In progress)

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Rāmāyana, by Manmatha Nath R

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.